THE

PRINCESS OF WALES

SARASWATI-BHAVANA STUDIES

( SANSKRIT )

THE

# SĀRASVATĀLOKA

EDITED BY

GOPĪNĀTHA KAVIRĀJA

KIRAṆA I

(SUPPLEMENT)

GOVERNMENT SANSKRIT LIBRARY,

BENARES.

1932

Price, Re. 1-4-0]

Saleable at half the printed price.

THE

PRINCESS OF WALES

# SARASWATĪ BHAVANA STUDIES

(SANSKRIT)

—o—

THE

# SĀRASVATĀLOKA



EDITED BY

GOPI NĀTH KAVIRAJ, M. A.,

Principal, Govt. Sanskrit College, Benares.

KIRAṆA I

(SUPPLEMENT)

## SANSKṚITA KAVI PARICHAYA

(BHĀRAVI)

GOVERNMENT SANSKRIT LIBRARY,

BENARES.

*Printed by Jai Krishna Das Gupta*

*Vidya Vilas Press, Benares City.*

1932

# सारस्वतालोकः

सम्पादकः—

श्रीगोपीनाथकविराजः, एम. ए.

प्रथमः किरणः

( परिशिष्टम् )



## संस्कृतकविपरिचयः

( महाकविभारविः )

निबन्धकः—

जयपुरमहाराजाश्रित–राजगुरुकथाभट्टवंश्य–कथाभट्टश्रीजयचन्द्रा–
त्मज–काशिकगवर्नमैण्टसंस्कृतपुस्तकालयीयप्रत्नतत्त्वान्वेषणा–
विद्वद्–वेदान्तभूषण–साहित्याचार्य–

**श्रीनन्दकिशोरशर्मा ।**

राजकीयसंस्कृतपुस्तकालयः,
सरस्वतीभवनम्,
वाराणसी ।

१९८९



# DEDICATION.

( With permission. )

*To*

The name of Lieutenant His Highness Saramad—i—Rajaha—i—Hindustan Raj Rajendra Shri Maharajadhiraj

## SAWAI MAN SINGHJI SAHIB BAHADUR,

The ruler of Jaipur, the illustrious representative of the Solar Dynasty, the worthy Scion of the holy line of Shri Ram Chandraji, an able upholder of the glorious tradition of Rajput Chivalry, the head of the great Kuswaha ( Kachhawaha ) clan, a wise administrator, a patron of Learning, a benefactor of humanity and a munificent donor, this little book of ***Katha Bhatta Pandit Nanda Kishore Sharma Sahityacharya***, an humble citizen of the State and a direct descendant of the family of the Rajguru Katha Bhatta Chhotelalji, is respectfully inscribed as a mark of high honour, profound respect, unfailing loyalty, deep devotion and sincerest good wishes (ashirvada),

*Her Highness Maji*
*SHRI CHAMPAVATIJI'S TEMPLE,*
Jaipur.

*BY*

THE AUTHOR.

# FOREWORD.

The following pages embody a portion of the researches of the author into the bibliography of Kavya Literature in Sanskrit. The booklet published now attempts to make a rapid and careful survey of the entire Literature concerning Bhāravi's Kirātārjunīya and of the commentaries written upon it at different times The work is based, so far as the commentaries are concerned, on a study of Mss. available at present, either in original or in reports furnished in the various Catalogues of Mss. Libraries. An attempt has also been made to fix with tolerable precision the dates of the commentators.

That studies of this nature are sadly lacking is evident to every historical student of Sanskrit literature. Before a systematic history of Sanskrit Literature—more thorough than those hitherto attempted—can be usefully undertaken, it would be necessary to take stock of whatever data we can gather on each of the sections of this Literature. It would certainly be a spade work, but all the more essential for the matter of that.

The writer is a young and earnest scholar, deputed to the Sanskrit College Library Benares by the state of Jaipur to make advanced and specialised studies in certain aspects of ancient Sanskrit literature. He worked at literary bibliography for some time and has amassed a mass of interesting materials relating to the history of ancient and mediaeval Sanskrit works. It is hoped that means will be forthcoming to bring out the results of his labour in a handy volume. But till then the publication of some of the papers in the form of pamphlets of the present size will not I believe be deemed improper. It is also expected that scholars from other parts of the country, interested in Sanskrit bibliography, will appreciate this work, supplement it wherever necessary with additional information and undertake similar studies in the remaining branches of Sanskrit Literature.

Govt. Sanskrit College,
Benares. } GOPINATH KAVIRAJ.

# ग्रन्थसंक्षिप्तविषयः।

* श्रीः *

# सारस्वतालोकः ।

## प्रथमः किरणः ।

## ( परिशिष्टम् )

साहित्याचार्यश्रीनन्दकिशोरशर्मप्रणीतः

## संस्कृतकविपरिचयः ।



### महाकविभारविः ।

संस्कृतकाव्यवाङ्मयं परिशीलितवद्भिर्विपश्चिदपश्चिमैर्महाकविर्भारविः "भारवेरर्थगौरवम्" इत्यैककण्ठ्येन समाद्रियते। (१)काव्यबृहत्त्रय्यां चैतत्काव्याय प्रदीयते प्रथममास्पदम्। नीतिनैपुण्याभिप्रायेणाप्यसौ कविरासादितवानग्रासनमिति कवेरमुष्य काव्यस्य च परिचयालोचने अत्र प्रस्तूयेते।

साहित्यरङ्गस्थलीसूत्रधारस्य कविताकामिनीवदनारविन्दविकाशनरवेर्महाकवेर्भारवेर्निश्चितसमयस्य निर्णयो यद्यपि दुष्करस्तथापि सप्तमशताब्दीमध्यभागे वर्त्तमानाभ्यां वामनजयादित्याभ्यां काशिकावृत्तौ भारविनामोल्लेखनात्, तथा ५५६ शाक ( ६३४ A. D. ) वत्सरे लिखिते द्वितीयपुलकेशिन ऐहोल [ Aihole ) शिलालेखे च भारविकीर्तेरुट्टङ्कनाच्च भारवेः सत्ता षष्ठशताब्द्या आदिमभागे कल्प-

( १ ) किरातार्जुनीयम्, शिशुपालवधम्, नैषधीयचरितं चेति काव्यबृहत्त्रयी। मेघदूतम्, कुमारसंभवम्, रघुवंशं चेति काव्यलघुत्रयी च कविसमयसिद्धा।

यितुं शक्यते। ऐहोलशिलालेखे चैवं लिखितमासीत्—

"येनायोजि नवेऽश्मस्थिरमर्थविधौ विवेकिना जिनवेश्म ॥
स विजयतां रविकीर्त्तिः कविताश्रितकालिदासभारविकीर्त्तिः"॥इति(१)

१८८९ खिस्ताब्दे प्रकाशिते वियेना ओरियण्टल् सोसाइटी जरनल् तृतीय भागे १४४ पृष्ठे हरमैन् जेकोबी महाशयोऽपि षष्ठशताब्दीपूर्वमेव भारविसमयं सममन्यत।

"किरातार्जुनीयकर्ता भारविः शैवमतावलम्बी आसीत्, अत एव च विष्णुमतानुयायिभिर्माघकविकृतशिशुपालवधकाव्यायोच्चस्थानं प्रदीयते" इति म० म० हरप्रसादशास्त्रिमहाभागानामभिमतम्। (२)

गदसिंहकृतकिरातार्जुनीयटीकायां भारवेः "प्राणदेव" इत्यपराख्यापि प्राप्यते। तद् यथा "कविकुञ्जरो भारविः प्राणदेवाऽपरनामधेयः किरातार्जुनीयं काव्यं प्रणिनीषुस्तल्लक्षणं वस्तुनिर्देशं प्रणयन्नाह" इत्यादि(३)।

## भारविदण्डिनोः पारस्परिकः सम्बन्धः।

इदं च महत् हर्षस्थानमस्माकं यद् राजकीयसमुद्योगानुकूल्येन साम्प्रतमपि चिरकालाच्छिन्नष्टानि कुहचित् गिरिगह्वरे विलीनानि ग्रन्थरत्नानि समुपलभ्यन्ते, यथावकाशं च तानि संमुद्र्यन्ते।

---

(१) जरनल् आफ् दी बम्बई ब्रांच आफ् दी रायल् एशियाटिकसोसाइटी वा० ९ पृ० ३१९ भाऊदाजीलेखः, तत्रैव १४ वा० २४ पृ० भण्डारकरलेखः, इण्डियन् आण्टिक्वेरी वा० ५ पृ० ६७; तथा ८ वा० २३७ पृष्ठे च फ्लीट् महाशयलेखः; प्रा० लें० षोडशलेखश्चात्र विषये द्रष्टव्यः।

(२) १९११ ई० प्रकाशितस्य संस्कृतमनस्क्रिप्ट्स् सैकिण्ड सीरीज-चतुर्थभागस्य भूमिका २६ पृ०।

(३) मित्रकैटोलाग् २१४० संख्यायाम्।

साम्प्रतमेव एस. के. रामनाथशास्त्रिणा, तथा रामकृष्णकविना दक्षिणभारतीग्रन्थमालायास्तृतीयप्रसूनरूपं 'अवन्तिसुन्दरीकथा, 'अवन्तिसुन्दरीकथासार'श्चेति महाकविना दण्डिना विरचितं ग्रन्थद्वयं संमुद्रय ( १९२४ ख्रि० ) विद्वद्भ्योऽन्वेषकेभ्य उपायनीकृतम् ।

यच्च "त्रयो दण्डिप्रबन्धाश्च" इत्यनेन वचनेन दण्डिनो ग्रन्थत्रये प्रथिते काव्यदर्शो दशकुमारचरितं चेति तत्कृतं ग्रन्थद्वयमेवोपलभ्य विद्वद्भिस्तृतीयो ग्रन्थश्छन्दोविचितिरन्यो वेति सन्दिह्यते । तच्चानेन गद्यपद्यात्मकतया द्विधा विभक्तेनावन्तिसुन्दरीकथाख्येन ग्रन्थेन दूरं निरस्यते ।

पं० रामकृष्णकविमहोदयेनाऽवन्तिसुन्दरीकथासारभूमिकायामेवं निरूपितम् । अवन्तिसुन्दरीकथारचयिता दण्डी दशकुमारचरितप्राणदाता च दण्डी कविरभिन्न एव । किं च दण्डिकवेः प्रपितामहकोटौ भारविः किरातार्जुनीयकाव्यप्रणेतेति ।

पं० रामकृष्णकविमहाशयस्य लेखोऽयमवन्तिसुन्दरीकथासारवर्णितवंशपरिचयाधारमालम्ब्य संजीवति । तद्यथा(१)—

कौशिकसगोत्राः दण्डिकविपूर्वपुरुषाः पश्चिमोत्तरदिगन्तराले

---

( १ ) "अस्त्यानन्दपुरं नाम प्रदेशे पश्चिमोत्तरे ।
आर्यदेशशिरोरत्नं यत्रासन् बहवो नृपाः ॥
ततोऽभिनिःसृता काचित् कौशिकब्रह्मसन्ततिः ।
सुरलोकादिवायान्ती पुण्यतीर्था सरस्वती ॥"
"नासिक्यभूमावौलछक्यान्मूलदेवनिवेशिताम् ।
प्राप्याचलपुरं......रीमधिवसत्यसौ ॥
तस्यां नारायणस्वामिनाम्ना नारायणोदरात् ।
दामोदर इति श्रीमानादिदेव इवाभवत् ॥
स मेधावी कविर्विद्वान् भारविः प्रभवो गिराम् ।
अनुरुध्याकरोन्मैत्रीं नरेन्द्रे विष्णुवर्धने" ॥
[अवन्तिसुन्दरीकथासार पृष्ठेषु १—२२]

प्रदेशे आनन्दपुराभिख्ये ( बडवाणनगरे ) निवासमकल्पयन्त । ततो नासिक्यप्रदेशान्तर्गतेऽचलपुरे स्वनिवासं परिवर्त्तितवन्तः । तत्राचलपुरे नारायणस्वामिनो नारायणोदरादादिदेव इव दामोदरनामधेयः पुत्र उत्पेदे । अस्यैव दामोदरस्योपाधिर्वा नामान्तरं वा भारविरित्यपि प्रतीयते । स च दामोदरो गङ्गावंशोद्भवस्याचलपुराधिपस्य दुर्विनीतनामधेयस्य साहाय्येन विष्णुवर्धनमहाराजे प्रणयं बबन्ध ।

ततश्च दामोदरभारवेस्त्रयः पुत्राः प्रादुरभवन् । तेषु मनोरथनाम्नः पुत्रस्य चत्वारः सूनवः समजायन्त । एषु चतुर्षु ह्यन्यतमो वीरदत्तो गौरीमुपयेमे । एवं च वीरदत्तस्य यः पुत्रो बभूव स एव "कविर्दण्डी कविर्दण्डी कविर्दण्डी न संशयः" इतिदण्डयाख्यां भेजे । अयमेव च दण्डी कविरवन्तिसुन्दरीकथामुपन्यबध्नात् ।

इत्थं चात्र वंशपरम्परा—

१—नारायणस्वामी

२—दामोदरभारविः

३—मनोरथः

४—वीरदत्तः(=गौरी)

५—दण्डी [ कविः ]

सिद्धान्तोऽयं रामकृष्णकवेरैतिहासिकपण्डितैर्न स्वीक्रियते । पद्यात्मकस्यावन्तिसुन्दरीकथासारस्याधारभूताऽवन्तिसुन्दरीकथा बहुषु भागेषु खण्डिता समधिगता । किं चायं भारविरेव किरातार्जुनीयकाव्यनिर्मातेत्यत्र विषये यावत्प्रमाणप्राबल्यं नोपलभेत तावत्कालं मतमिदं परीक्षकाणां विदुषां नाभ्युपगमनीयतामर्हति । (१)

---

(१) यथाऽवन्तिसुन्दरीकथायाम्—

"नारायणस्वामिनो नाभिपद्म इव ब्रह्मैकधामा दामोदरस्वामिना तमते......

एतत्सर्वं रामकृष्णकविसिद्धान्तनिराकरणं डाक्टरसुशीलकुमारदेमहोदयेन प्राकाशि(१)। ततश्च (२) जी० हरिहरशास्त्रिमहाभागेनाऽपि डा० सुशीलकुमारदेमहाशयस्य मतं समर्थयता "भारविर्दण्डी च" इति शीर्षकमयो निबन्धोऽलेखि। तत्र निबन्धे "दामोदरभारविः" इत्येकव्यक्तेराख्या न संगच्छते। किन्तु दामोदरो भिन्नो भारविश्च भिन्न इति निरूपितम्। अत्र प्रमाणतया तेन त्रिवेन्द्रस्थानन्तशयनपुस्तकालये १९२४-२५ खिस्ताब्दे संगृहीतं संपूर्णावयवमवन्तिसुन्दरीकथायाः पुस्तकमुपन्यस्तम्। पं० रामकृष्णकविप्रकाशितमवन्तिसुन्दरीकथापुस्तकं तु खण्डितावयवं समधिगतमासीत्। अतो दामोदरो भिन्नः, भारविश्चान्यः।

अनन्तशयनपुस्तकालयीयावन्तिसुन्दरीकथाभागश्चैवम्—

"तत्रोदपादि भगवतो विधिवदाहृतसप्ततन्तुरूपिणो नारायणस्वामिनो नाभिपद्म इव ब्रह्मैकधामो दामोदरस्वामिनामा (त्रेमातजो ?) यमः कुमारः। स यौवनारम्भ एवातिसुभगाकृतिः, अकृतकवाक्यदर्शितपुण्यस्वभावया, सर्वाङ्गमनोहरया, सर्वकलाविदग्धया, सर्वभाषाप्रवीणया, ललितपदविन्यासया, चतुरहृदयालङ्कारया, विशुद्धजातवृत्तया, सरस्वत्या स्वयंवरया इव कन्यकया स्वयमुपेत्य सस्नेहमस्वज्यत। को हि नाम भगवतीं भवितव्यतामतिक्रम्य यथा समीहितेन साधयति पथा। यतो हि कौशिककुमारो महाशैवं गवां प्रभवं प्रदीप्तभासं भाखेव रविमिवेन्दुरनु रूप्य ? (रुध्य) दर्श इव पुण्यकर्मणि विष्णुवर्धनाख्ये राजसूनौ प्रणयमन्वबध्नात्"।

---

सर्वाङ्गमनोहरया सर्वज्ञानया विदग्धया सर्वभाषाप्रवीणया प्रमाणयुक्तया ललितपदविन्यास............स्नेहमस्वज्यत।" "यतः कौशिक............व पुण्यकर्मणे विष्णुवर्धनाख्ये राजसूनौ प्रणयमन्वबध्नात्" ( ६ पृ० )।

( १ ) १९२६ ई० मार्चमासे प्रकाशिते इ० हि० का० पुस्तके।

( २ ) इ० हि० का० मार्च १९२७ पृष्टे १६९ मिते लेखो द्रष्टव्यः।

एतद्गद्यभागेनेदं स्पष्टतया प्रतीयते यत् कौशिककुमारो दण्डिप्रपितामहो दामोदरो भारविं कविमवलम्ब्य विष्णुवर्धननाम्नि राजकुमारे प्रणयं बबन्धेति, तेन च सह भारविकवेः प्रगाढं स्नेहबन्धनमासीदित्यपि च।

यदपि पं० बलदेव एम. ए. उपाध्यायमहाभागेनैकव्यक्तेरेव 'दामोदरभारवि'रित्याख्यां स्वीकृत्येतिहासावरणमकारि(१)। तदपि चानेनोक्तपुस्तकसमधिगमनेन निराक्रियत इत्यविदितम्।

अवन्तिसुन्दरीकथासारपुस्तकेनैतत्तु निश्चीयत एव–यत् किरातार्जुनीयकाव्यकर्त्ता भारविः प्रथमसमये महाराष्ट्रदेशाधिपतेर्विष्णुव(२)-र्धनस्य, ततः कर्णाटकमहाराजस्य दुर्विनीतस्य,(३) एवं काञ्चीनरेशस्य पल्लववंशीयसिंह(४)विष्णोश्चाश्रये स्वकालं यापयामासेति।

किं च पं० बलदेवोपाध्याय एम० ए० महोदयेन विष्णुवर्धनस्य ६१० ई० ( A. D. ), दुर्विनीतस्य ६२० ई० ( A. D. ), सिंहविष्णो-

---

( १ ) नागरीप्रचारिणीपत्रिका २६७ पृ० ( वि० सं० १९८१ )

( २ ) स मेधावी कविर्विद्वान् भारविं प्रभवं गिराम्।
अनुरुध्याकरोन्मैत्रीं नरेन्द्रे विष्णुवर्धने॥

( ३ ) स दुर्विनीतनामासीत् अन्वर्थाभिधानवान्।
तस्यान्तिके वसत्येष······॥

अनेन राज्ञा किरातार्जुनीयकाव्यपञ्चदशसर्गटीका कृता, अतस्तत्रैतस्य वर्णनं समयनिरूपणं च विलोकनीयम्।

( ४ ) "अस्ति प्रासादविस्तारग्रस्तव्योमान्तरा पुरी।
काञ्चीपुराख्या कल्याणी ककुभां कुम्भजन्मनः॥
तस्यां जज्ञे बुधव्रातप्रध्वस्ताखिलपल्लवः।
पल्लवेषु महीपालः सिंहविष्णुरिति श्रुतः"। [अवन्तिसुन्दरीकथासारे]

श्च ६२५ ई० ( A. D. ) वत्सरे समयो निरणायि । (१)

जार्ज एम. मारेस् एम. ए. ( George M. Moraes. M. A. ) महोदयैश्च दुर्विनीतराज्यकालः ६००-६५३ ई० ( A. D. ) यावदभ्युपेतः । (२)

अस्मन्मते तु दुर्विनीतराज्यकालः ५६७-६१७ ई० वत्सरं यावत्समुचित इति दुर्विनीतकृतकिरातार्जुनीयव्याख्यापरिचयप्रसङ्गे स्फुटीभविष्यति । एवं च भारवेः कवेः समयः ५५०-६०० ई० ( A. D. ) वत्सरं यावदभ्युपेयः । ततश्च ६३४ ईशवीयवर्षे ऐहोललेखे भारविकीर्तेरुल्लिखनं सर्वत्र प्रसारित्वं चाव्याहतं युक्तियुक्तं वास्तविकं संगतं च मन्महे ।

## भारवेः किरातार्जुनीयम् ।

५५०-६०० ई० ( A. D. ) वत्सरे वर्त्तमानस्य भारवे रचनायामुत्कृष्टं वस्तु किरातार्जुनीयम् । काव्यस्यास्य समादरो विद्वत्समाजेऽर्थगौरवाभिप्रायेणोन्नतिशिखरारूढः । अत एव पृथ्वीकोङ्गणिमहाराजदानपत्रे "किरातार्जुनीयपञ्चदशसर्गटीकाकारो दुर्विनीतनामधेयः" इत्युल्लिखितमासीत् । लेखेनानेनेदमप्यावेद्यते यत्काव्यस्यास्य परिशीलनं महाराजैरपि विधीयते स्म । लेखोऽयं ६९८ शाक ( ७७६ A. D. ) वत्सरे लिखितः ।

[ द्रष्टव्यम्—इ. आ. २ भागे १५६-५९ पृष्ठेषु; तथा प्रा० ले० त्रयोदशलेखे च ]

महाकविषु प्राप्तप्रतिष्ठेन माघकविना शिशुपालवधनामकं महाकाव्यं किरातार्जुनीयकाव्याधारेणैव विरचितमिति सुदृढं प्रदर्शयिष्यतेऽस्माभिः शिशुपालवधकाव्यवर्णने ।

---

( १ ) १९८१ वि० सं० नागरीप्रचारिणीपत्रिका ।

( २ ) The Kadamba Kula, p. 57.

किं च, काव्येऽस्मिन् महाकाव्यनियमानुसारेणाष्टादशसर्गाः, तेषु च १०४० संख्याकानि पद्यानि । प्रतिसर्गान्तिमपद्ये च कविनात्र लक्ष्मी-शब्दप्रयोगोऽकारि समनोनियोगमिति पण्डितसमाजे काव्यस्यास्या-परं नामधेयं लक्ष्म्यङ्कमित्यपि प्रथितम् ।

यशोधरकृतकामसूत्रटीकायां (१)जयमङ्गलायाम्, वामनकृताल-ङ्कारसूत्रवृत्तौ, क्षेमेन्द्रकृतसुवृत्ततिलके ( पृ० ३. १८, ), एकादशशता-ब्दीप्रथमभागे मुञ्जराज्यकाले वर्त्तमानस्य धनपालस्य तिलकमञ्जर्याम्, राजशेखरग्रन्थेषु च किरातार्जुनीयस्य श्लोका उदाहरणत्वेन प्राची-नकविसंकीर्तनव्याजेन चोद्धृताः ।

किरातार्जुनीयस्य कथाभागो महाभारतीयवनपर्वत उद्धृत्य विकाशमानीतः । असौ कविर्महाभारतीयवनपर्वकथां(२) स्वबुद्धिनै-पुण्येन चमत्कृतां परिष्कृतां च विधाय भारतीयकविसमाजेऽग्रासन-माससादेति नाविदितं विदुषाम् ।

## भारवे रचनासरणिः ।

भारवे रचनासरणिमालम्ब्य यत् किञ्चिल्लिखनं तदपि परिशी-लितभारविगिरां विदुषां समक्षे बालचापल्यमिव । तथापि प्रसक्तानु-प्रसक्त्यात्रावेदनमावश्यकम् । भारविवाणी कीदृशीति विवेके प्रस्तुते कविः स्वयमेव भङ्ग्यन्तरेण भीमोक्तिप्रशंसां कुर्वतो युधिष्ठिरस्य मु-खेन स्वगिरं वर्णयांबभूव ।

यथा—

"स्फुटता न पदैरपाकृता, न च न स्वीकृतमर्थगौरवम् ।
रचिता पृथगर्थता गिरां न च सामर्थ्यमपोहितं क्वचित् ,, ॥

( किरा० २।२७ )

---

( १ ) अत्र विषये महान् विवादः, कामन्दकीयनीतिशास्त्रटीकाकर्त्तुः शङ्करार्य-स्येयं टीकेति निर्णीतमस्माभिर्भट्टिकाव्यव्याख्यायां जयमङ्गलायाम् ।

( २ ) २७–४१ अध्यायाः ।

पदानां स्फुटत्वम्, अर्थगाम्भीर्यम्, पुनरुक्तेरभावः, इत्येते गुणा भारविभारत्यामपि समुपलभ्यन्ते । अपिच, चतुर्दशसर्गेऽपि वाणीवर्णनं भारविणा विहितम् । यथा—

"विविक्तवर्णाभरणा सुखश्रुतिः प्रसादयन्ती हृदयान्यपि द्विषाम् ।
प्रवर्त्तते नाकृतपुण्यकर्मणां प्रसन्नगम्भीरपदा सरस्वती" ॥ इति ।
( किरा० १४ । ३ )

भारविवचस्यपि प्रसन्नगम्भीरपदत्वादिदर्शनादनेनात्रापि प्रकारान्तरेण स्वगीरेव समालोचितेति प्रतीयते ।

किं च पूर्वमेवावेदितं यद् भारवेर्विद्वत्समाजे समादरोऽर्थगौरवाभिप्रायेण प्रचलित इति । तथा च चित्रभानुनापि स्वटीकायां शब्दार्थदीपिकायां (१)स्पष्टमेवोद्घोषितम्—

"गभीरता भारविभारतीषु या प्रसन्नता चानुपदं प्रतीयते ।
इयत्तया तामवगन्तुमुद्यतो ध्रुवं सुधासिन्धुतलं दिदृक्षते" ॥ इति ।

सुप्रथितेन व्याख्यात्रा मल्लिनाथेनाप्यर्थगौरवाभिप्रायेणैव भारविवचो नारिकेलफलसंमितमिति निगदितम्—

"नारिकेलफलसंमितं वचो भारवेः सपदि तद्विभज्यते ।
स्वादयन्तु रसगर्भनिर्भरं सारमस्य रसिका यथेप्सितम्" ॥ इति ॥

काव्येऽस्मिन् कविः खलु स्वीयबुद्धिवैभवं चमत्कारं कल्पनाशक्तेर्विचित्रतां चापूर्वरीत्या प्रादर्शयत् । यथा—आयुधधारी किरीटी यस्मिन्काले इन्द्रप्रसत्तये कठिनां तपस्यां कुरुते स्म, तदा मरुत्वान् वृद्धब्राह्मणवेशं धृत्वामुमूचे—"त्वया विचित्रया प्रणाल्या तपश्चर्यते । कुतो वीररसानुकूलमायुधधारणम्, कुतश्च शान्तरसानुकूला तपश्चर्या । अनेन पथा मुक्तिर्नाधिगन्तुं शक्यते" इति ।

---

( १ ) अनन्तशयनग्रन्थमालायां (त्रिवेन्द्रं संस्कृतसीरीज) त्रयः सर्गा मुद्रिताः ।

श्रुत्वेदमर्जुनः प्रोवाच, "नाहं मुमुक्षुः—सज्जना मामपहसन्तु मम धीप्रमादं निश्चिन्वन्तु वा, अहं तु वंशलक्ष्म्या उद्धारमकृत्वा निर्वाणमपि विघ्नमेव मन्ये"(१) इति।

यथा वा—

अर्जुनः स्वनिश्चयं जगाद—"संभावितस्य चाकीर्तिर्मरणादतिरिच्यते" इति न्यायेन यावत्कालं पुरुषो मानान्न हीयते, तावत्कालमेव स लक्ष्मीभाजनं भवति, तावदेव च तस्य स्थिरं यशस्तावदेव च तस्य मनुष्यता। किमधिकजल्पनेन—मम त्वेष निश्चयः। नगमूर्धनि मम विनाशो भवतु तावत्। अहं तु सहस्राक्षमाराध्य स्वापवादशङ्कुमुद्धरे" इति(२)।

किंच—

मूकदानवो हि शूकरवेषमारोप्य कदाचिदर्जुनसविधे पर्यटन्नासीत्। तदात्रैव भगवाञ्छङ्करोऽपि किरातवेषधारी समायातः। एवं तत्र व्यतिकरे किरातराजोऽर्जुनश्च द्वावेव युगपत् तस्मिन् शूकरे बाणममुञ्चताम्। ततश्चार्जुनो यदा स्वबाणं शूकरशरीरादुद्गृह्णन्नासीत्, तदा कोऽप्यन्यः किरातस्तत्र समागत्याब्रवीत् "बाणोऽयं मम स्वामि-

---

(१) "अपहस्येऽथवा सद्भिः प्रमादो वास्तु मे धियः।
अस्थानविहितायासः कामं जिह्रेतु मां भवान्॥
वंशलक्ष्मीमनुद्धृत्य समुच्छेदेन विद्विषाम्।
निर्वाणमपि मन्येऽहमन्तरायं जयश्रियः" इति॥ (किरा० ११।६८–६९)

(२) "तावदाश्रीयते लक्ष्म्या तावदस्य स्थिरं यशः।
पुरुषस्तावदेवासौ यावन्मानान्न हीयते"॥ (किरा०११।६१)
"विच्छिन्नाभ्रविलायं वा विलीये नगमूर्धनि।
आराध्य वा सहस्राक्षमयशःशल्यमुद्धरे" इति॥ (किरा० ११।७९)

नो, मह्यं दीयताम् । भवादृशो धृतमुनिवृत्तिका अपीदृशमन्यायमाचरन्तीति चित्रम् ।" इति(१) ।

भारविणास्य प्रतिवचनं पार्थमुखेनाद्भुतया कल्पनया निबद्धम् । तद् यथा—

अर्जुनः प्रत्यवादीत्—"महतीयं ते मतिमत्ता । यदि भवतः स्वामिनापि शूकरेऽत्र बाणः प्रहितः स्यात्, तदा तस्य विनाशोऽपि नियत एव । यदि चान्वेषणमेवाभीष्टं तदाऽन्विष्यतां तावत्—पर्वतोऽयं विस्तृतः । नायं सतां मार्गो यत्कस्यापि सज्जनस्योपरि मिथ्याकलङ्कसमारोपणं नाम । न हि वन्याः पशवः कस्यापि मानवस्य पैतृकी सम्पत्तिर्येनान्यस्तेषु प्रहारमेव न कुर्वीत"(२) इति ।

किंच, भारवेर्यादृशी सर्वतोमुखी प्रतिभाऽर्थालङ्कारनिबन्धने प्रावर्त्तत तादृश्येव शब्दालङ्कारेऽपि । तथा च पञ्चदशसर्गे बहवश्चित्रबन्धा निबद्धाः । यमकम्, अनुप्रासः, एकाक्षरः, गोमूत्रिकाबन्धः, सर्वतोभद्रः, अर्धभ्रमकश्चेति केचन तद्भेदा अत्र निरूपिताः ।

यथा च चित्रबन्धेषु नकारेणैकाक्षरबन्धो निबद्धः—

---

(१) "स्मर्यते तनुभृतां सनातनं न्यायमाचरितमुत्तमैर्नृभिः
ध्वंसते यदि भवादृशस्ततः कः प्रयातु वद तेन वर्त्मना" इति ॥
( किरा० १३।४२ )

(२) "ध्रुवं प्रणाशः प्रहितस्य पत्रिणः शिलोच्चये तस्य विमार्गणं नयः ।
नायुक्तमत्रार्यजनातिलङ्घनं दिशत्यपायं हि सतामतिक्रमः" इति ॥
( किरा० १४।९ )

"वनाश्रयाः कस्य मृगाः परिग्रहाः, शृणाति यस्तान् प्रसभेन तस्य ते ।
प्रहीयतामत्र नृपेण मानिता, न मानिता चास्ति भवन्ति च श्रियः" इति ॥
( किरा० १४।१३ )

"न नोननुन्नो नुन्नो नो, नाना नानानना ननु।
नुन्नोऽनुन्नो ननुन्नेनो, नानेना नुन्ननुन्ननुत् ॥" [किरा० १५।१४]

पदपाठस्त्वयम्—'न, ना, ऊननुन्नः, नुन्नोनः, ना, अना, नानाननाः, ननु, नुन्नः, अनुन्नः, ननुन्नेनः, ना, अनेनाः, नुन्ननुन्ननुत्, इति ॥

अत्रान्तिमवर्णस्तकारस्तु "नान्त्यवर्णस्तु भेदकः" इति न्यायेन नैकाक्षरबन्धभेदकः।

एतेषां बन्धानां विदुषामपि दुरवबोधार्थानां (१)ध्वन्यालोकादिग्रन्थेषु निषिद्धत्वेऽपि भारवेस्तत्र प्रवृत्तिः स्ववैदग्ध्यविद्योतिकेति विद्वज्जनचित्तानुरञ्जनफलैव।

कविनात्र काव्ये कियन्ति छन्दांसि कियन्तश्चालङ्कारा निबद्धा इति सर्वं Carl Cappellar महाशयेन जर्मनभाषायामनूदिते किरातार्जुनीये काव्ये विलोकनीयम्। स चानुवादः १९२२ खिस्ताब्दे प्रकाशित आसीत् हारवर्डसंस्कृतग्रन्थमालायाम्।

## भारवेर्मुक्तकश्लोकाः।

किरातार्जुनीयेऽनुपलब्धानि मुक्तकपद्यानि कानिचिद् भारविनाम्नोद्धृतानि सुभाषितकाव्येषु समुपलभ्यन्ते। तत्र यथा सदुक्तिकर्णामृते(२)–

"सोद्वेगं करिकृत्तिवाससि भवद्व्रीडान्वितं ब्रह्मणि
त्रैलोक्यैकगुरावनादरवलत्तारं शचीभर्तरि ॥
त्रासामीलितपद्मभास्वतिलसत्प्रेम प्रसन्नं हरौ
क्षीरोदोत्थितया धिया विनिहितं चक्षुः शिवायास्तु वः" ॥

---

(१) "शृङ्गारे करुणे शान्ते यमकादिनिबन्धनम्।
शक्तावपि प्रमादित्वं विप्रलम्भे विशेषतः" इति ॥ ( ध्वन्यालोके )

(२) १२०० खिस्ताब्दे वर्त्तमानेन श्रीधरदासेन प्रणीतम्।

काश्मीरकवल्ल(१)भदेवकृतसुभाषितावलौ च—

"कामिनीवदननिर्जितकान्तिः शोभितुं न हि शशाक शशाङ्कः ।
लज्जयेव विपुलं वपुराप्तुं शीधुपूर्णचषकेषु ममज्ज" ॥ (संख्या २०१५)

"सर्वथा स्वहितमाचरणीयं किं करिष्यति जनो बहुजल्पः ।
विद्यते न हि स कश्चिदुपायः सर्वलोकपरितोषकरो यः" ॥
( संख्या २९०५ )

"जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते ।
गुणाधिके पुंसि जनोऽनुरज्यते, जनानुरागप्रभवा हि सम्पदः" इति ॥
( संख्या २९१७ )

## किरातार्जुनीयस्य मुद्रणम् ।

इदं काव्यमनेकैर्विद्वद्भिरनेकधा सम्पाद्य प्रकाशितम् । म० म० दुर्गाप्रसादमहोदयैर्मल्लिनाथीयघण्टापथव्याख्यासमलङ्कृतं बम्बईतः प्रकाशितम् । म० म० त० गणपतिशास्त्रिभिश्च चित्रभानुकृतशब्दार्थदीपिकासमेतं १९१८ खिस्ताब्देऽनन्तशयनग्रन्थमालायां मुद्रापितम् । प्रो० कार्ल कापेलर महाभागैर्जर्मनभाषायामनूद्य १९२२ ईशवीयवर्ष हारवर्डसंस्कृतग्रन्थमालायां संग्रथितम्। पङ्गरकरमहोदयेनाङ्गलभाषायामनूदिताः १—१० सर्गाः १९०२ खिस्ताब्दे, तथा एम. आर. काले महाशयेन च मल्लिनाथटीकाङ्गलभाषानुवादाभ्यां विभूषिताः १—३ सर्गा बम्बईनगराद्धिकाशिताः । एवं हरिदासभट्टाचार्येण गुरुनाथभट्टाचार्येण च कलकत्तानगरात् स्वस्वटीकासंयुतं तथा गौरीना-

---

( १ ) वल्लभदेवः १४ शताब्द्यां बभूवेति डा० कीथप्रभृतिपाश्चात्याः । वयं तु सर्वानन्दकृतायाममरकोषटीकायां काश्मीरकवल्लभदेवसुभाषितावलिनामोल्लेखनात् तत्कालीनं मन्महे । सा च टीका—११५९ खिस्ताब्दे रचिता । त० गणपतिशास्त्रिणाऽनन्तशयनग्रन्थावलौ प्रकाशिता च ।

थपाठकेन काशीतो म०म० जीवानन्दतनुजाभ्यामाशुबोधनित्यबोधमहोदयाभ्यां च कलकत्तापुरात्, मल्लिनाथीयव्याख्यायुतं सपूर्णमिदं काव्यं प्राकाश्यं नीतम्। १-५, ११-१४ सर्गाः संस्कृतटीकाभाषाटीकाभ्यां संवलिताः वेङ्कटेश्वरयन्त्रालयात्, १-३ सर्गाश्च कनकलालठक्कुरकृतभावार्थदीपिन्या गङ्गाधरकृतया सुधाख्यया च युताः काशीस्थचौखम्बासंस्कृतग्रन्थमालातः, गौरीनाथकृतया सुबोधिन्या समेताः काशीस्थशारदाभवनात्, प्रकाशितास्त एव सर्गा जीवारामव्याख्यया, अम्बिकाप्रसादटीकया च संवलिताः प्राकट्यं गताः। एवमन्यान्यपि बहूनि संस्करणानि सन्ति। तानि च ग्रन्थगौरवभियात्र नोद्धृतानि।

## किरातार्जुनीयस्य टीकाः।

अथ किरातार्जुनीयकाव्यटीकापरिचयप्रसङ्गे किञ्चिन्निवेद्यते। काव्यस्यैतस्य टीका विदितसमया अविदितसमयाश्चेति द्विधा विभक्ताः। तत्र विदितसमयानां समयानुसारेण, अविदितसमयानां च वर्णानुक्रमेणात्र संगृहीतं वर्णनम्। वर्णानुक्रमेऽपि कर्तृनामप्राधान्येन, अविदिते च कर्तृनाम्नि टीका-नाम-प्राधान्येन वर्णनं विधायान्तेऽविदितसंज्ञानामनुपलब्धकर्तृनामिकानां परिचयो दत्त इत्यवगन्तव्यम्।

## क—विदितसमयाष्टीकाः।

### १-कर्णाटकमहाराजदुर्विनीतकृता व्याख्या।

( ५६७-६१७ A. D. )

इयं व्याख्या स्वरूपतो नोपलभ्यते। ताम्रपत्रेषु केवलमस्या उल्लेख एव समधिगम्यते। इयं च पञ्चदशसर्गोपरि विहितासीदित्यपि प्रतीयते। तद् यथा—

"श्री(१)मत्कोङ्गणिमहाधिराजस्य, अविनीतनाम्नः पुत्रेण, पुन्ना-

---

( १ ) माइसोर आर्के आलाजिकल् सर्वे रिपोर्ट १९१६ सन् ३६ पृष्ठे।

टराजस्कन्दवर्मप्रियपुत्रिकाजन्मना, ...............शब्दावतारकारेण, देवभारतीनिबद्धबड्डकथेन, किरातार्जुनीये पञ्चदशसर्गटीकाकारेण दुर्विनीतनामधेयेन" ।

पञ्चदशसर्गोपर्यैव व्याख्यानिर्माणस्य प्रयोजनं किमिति शङ्कायां त्विद-मनुमीयते । पञ्चदशसर्गे भारविणा शब्दालङ्काराः, एकाक्षर(१)-द्व्यक्षर(२)सर्वतोभद्र(३) गोमूत्रि(४)कावन्धाऽर्धभ्रमकप्रभृतयो(५)-निबद्धाः तेषामर्थालोचनं च विदुषामपि दुष्करमिति विधिच्यैव शब्दा-वतारकारेण शब्दालङ्कारप्रियेण राज्ञा तस्मिन्नेव सर्गे टीकेयं निबद्धेति ।

किं च—

उपर्युक्तलेखसंवादेन, इन्डियन् आण्टिकेरी(६)पत्रिकाप्रका-शितश्रीपृथ्वीकोङ्गणिमहाराजदानपत्रस्थपदमपि संगच्छते । दानपत्र-मिदं दक्षिणस्यां दिशि शृङ्गेरीपट्टनाम्नि ग्रामे समुपलब्धम् । अत्र "किरातार्जुनीयपञ्चदशसर्गादिकोंकारो दुर्विनीतनामधेयः" इति वा-क्यार्थसङ्गतिः दानपत्रसम्पादकमहाभागानामपि न स्फुरिता । अत एव डाक्टर आफ्रेक्टमहाशयेनापि बृहत्सूचीपत्रे ( कैटोला-गुस् कैटोलागूम् ) अस्या व्याख्याया नाम नोट्टङ्कितम् । साम्प्रतं तूक्त-लेखसंवादेनेदं दृढीभूतं यत् "किरातार्जुनीयपञ्चदशसर्गटीकाकारो दुर्विनीतनामधेयः" इत्येव तत्र पाठ इति ।

यच्च—विष्णुवर्धनदुर्विनीतसिंहविष्णुमहाराजानां समाश्रये भारविः स्वकालं यापयामासेत्यस्माभिः प्रागेव निवेदितमवन्तिसुन्दरीकथासा-रग्रन्थाधारेण(७), तदेव चात्र विशदीक्रियते—कौशिकगोत्रो दामोदरो

---

(१) १५ सर्ग १४ । (२) १५ सर्ग ३८ । (३) १५ सर्ग २५ ।

(४) १५ सर्ग १२ । (५) १५ सर्ग २७ । (६) वाल्यूम २ पृ० १६६–१६९, तथा प्रा० ले० १ भागे १३ लेखे ५५–५९ पृष्ठेषु ।

(७) दक्षिणभारतीग्रन्थमालायास्तृतीयसंख्यायां मुद्रितः ।

भारविसमाश्रयेण विष्णुवर्धने स्नेहं समुत्पाद्य ततः कियत्कालानन्तरं कर्णाटकमहाराजदुर्विनीतान्तिके वसन् काञ्चीनगराधीशेन तत्कविताकृष्टहृदयेन सिंहविष्णुना समाहूतस्तदन्तिकेऽपि कञ्चित् कालं न्यवात्सीदित्यवन्तिसुन्दरीकथावर्णितोदन्ताद्, भारवेरपि दुर्विनीतसिंहविष्णुमहाराजाभ्यां सह सम्बन्धोऽनुमीयते।

भारविं समवलम्ब्य विष्णुवर्धने कृतपरिचयो दामोदरः प्रतिकर्तुमनाः स्वपरिचितयोर्दुर्विनीतसिंहविष्णुमहाराजयोरुपर्यस्य स्नेहं कथं न समुत्पादयेत्। अत एव च भारविपरिचितेन दुर्विनीतमहाराजेन किरातार्जुनीयपञ्चदशसर्गोपरि व्याख्याप्याख्यायि।

इत्थं भारविदुर्विनीतमहाराजयोः परस्परं पोष्यपोषकसम्बन्धे प्रमाणसिद्धे दुर्विनीतमहाराजस्य समय एव भारविसमय इत्यपि सुवचम्।

दुर्विनीतमहाराजचरितं समयश्च पृथ्वीकोङ्गणिमहाराजदानपत्रतो विज्ञायते।

आसीत् कर्णाटकमहाराजदुर्विनीतस्य माता पुन्नाटराजस्कन्दवर्मणः पुत्री। दुर्विनीतमहाराजेन शब्दावतारो व्याकरणग्रन्थो गुणाढ्यकृतायाः पैशाचीभाषामय्या बृहत्कथायाः संकृतेऽनुवादश्च स्वयं निर्मितः। किं चायं गङ्गावंशावतंसः, काण्वायनसगोत्रः, महामहाशैवः, अविनीतमहाराजपुत्रो बभूव। विद्याव्यासङ्गः कवितासमादरश्चास्मिन्वंशे पारम्पारक आसीदित्यपि तत एव प्रतीयते।

वंशपरम्परा चास्येत्थम्—

१–कोङ्गणिवर्मधर्ममहाराजः ( गङ्गान्वयः काण्वायनसगोत्रश्च )
२–श्रीमाधवः ( दत्तकसूत्रवृत्तिकर्त्ता )
३–हरिवर्मा ( अरिवर्मा वा )
४–विष्णुगोपः
५–माधववर्मा
६–कोङ्गणिमहाराजः, अविनीतनामा (कृष्णवर्ममहाराजभागिनेयः)

७-दुर्विनीतनामा महाराजः ( किरातपञ्चदशसर्गटीकाकारः )

८-मुष्करः

९-श्रीविक्रमः ( नवकोशस्य नीतिशास्त्रस्य च वेत्ता )

१०-भूविक्रमः

११-नवकामः (सोमेश्वरापराख्यः, गतमहाराजस्य कनिष्ठो भ्राता)

१२-पुत्रः ( नाम्नोऽनुपादानादनेन राज्यं न कृतमिति मन्ये )

१३-पृथ्वीकोङ्गणिमहाराजः ( श्रीपुरुषापराभिख्यः )

पृथ्वीकोङ्गणिमहाराजस्य प्रवर्धमानविजयराज्यतोऽतीते पञ्चाशत्तमे वत्सरेऽष्टानवत्युत्तरषट्शते ६९८ शाकवर्षे (=७७६ ई०) दानपत्रप्रदानेनानुमीयते यदयं महाराजः ६४८ ( ६९८—५०=६४८ ) शाकवर्षे ( ७२६ ई० ) कर्णाटकराज्यमधिचक्र इति ।

किरातार्जुनीयटीकाकारो दुर्विनीतस्त्वस्माच्छ्रीपुरुषात्षष्ठः पूर्वतनः पुरुषः । श्रीपुरुषात्पूर्वेषु षट्सु पुरुषेषु नवकामपुत्रस्यानिर्दिष्टनाम्नोऽल्पायुष्ट्वेन राज्यानभिषिक्ततयोक्तसमये पञ्चानामेव कर्णाटकमहाराजानां राज्यकालस्य संभूय प्रायः १५० वर्षमितस्य व्यवकलनेन ४९८ ( ६४८-१५०=४९८ ) शाकवत्सरे ( ५७६ ई० ) दुर्विनीतावस्थितिः स्वीकर्तुं शक्यते ।

किं चोक्तसमयनिर्णये प्रमाणान्तरं चेदम्—

कर्णाटकाधीशो नवकामनामा महाराज आत्मनश्चतुस्त्रिंशत्तमे राज्यवर्षे ६३५ शकवत्सरे (=७१३ ई०) ताम्रशासनमेक(१)मलेखयत् । लेखोक्तवर्षात् ( ६३५ शाक=७१३ ई० ) नवकामराज्यकालस्य चतुस्त्रिंशदब्दात्मकस्य व्यवकलनेन ६०१ (=६७९ ई० ) इत्यायाति । ततश्च नवकामं विहाय पूर्ववर्त्ती चतुर्थो राजा दुर्विनीत इति चतुर्णामेषां राज्यकालात् प्रायः १२० वर्षमितात् प्राक् ४८१ शाकाब्दे (=५५९ ई०) महाराजदुर्विनीत आसीदिति

---

( १ ) एपिग्राफिया कर्णाटिका, ३ वा०, १०७ पृ०, ११३ नं० ।

युज्यते वक्तुम्। अत एव च ५६७—६१७ ईशवीयवत्सरं यावद्राज्यकालस्तस्येति निश्चये नास्ति संशीतिलवोऽपि(१)।

किंच—गङ्गावंश्यानां राज्ञां बहूनि ताम्रशासनानि समधिगतानि। तानि चात्र संगृह्यन्ते।

| राज्ञां नामानि— | ताम्रशासनप्रकाशनस्थानानि— |
|---|---|
| (क) कोङ्गणिहरिवर्म (अरिवर्म) महाराजः— | १ (इ० आ० ८ वा० २१२ पृ०) |
| | २ ( एपि० कर्णा० ३ वा० २०२ पृ० ११२ नं० )। |
| (ख) विष्णुगोपः— | १ ( इ० आ० ७ वा० १७३ पृ०; माइसोर इन्स्क्रि० नं० १५६ पृ० २९३ )। |
| (ग) अविनीतः (कोङ्गणिराजः)— | १ ( इ० आ० ५ वा० १३६ पृ०; माइसोर इन्स्क्रि० नं० १५४ पृ० २८९ ) |
| | २ (इ० आ० १ वा० पृ० ३६३; कुर्ग इन्स्क्रि० १ नं० १ पृ०; माइसोर इन्स्क्रि० नं० १५१ पृ० २८२)। |
| (घ) दुर्विनीतः ( ,, )— | १ ( इ० आ० ५ वा० १३८ पृ०; माइसोर इन्स्क्रि० नं० १५५ पृ० २९१ ) |
| | २ ( इ० आ० ७ वा० १७४ पृ०; माइसोर इन्स्क्रि० नं० १५७ पृ० २९४ )। |

---

( १ ) एतेन—गौरीनाथपाठकमहाभागैः ४३९ शाको ( =५१३ ई० ) वत्सरो दुर्विनीतकाल इति 'महाकविर्भारविर्दामोदर'नामकनिबन्धस्य २१ पृष्ठे प्रतिपादितं निरस्तं वेदितव्यम्।

| राज्ञां नामानि— | ताम्रशासनप्रकाशनस्थानानि— |
|---|---|
| (ङ) नवकामः— | १ ( एपि० कर्णा० ३ वा० १०७ पृ० ११३ नं० ) |
| | २ ( इ० आ० १४ वा० २३० पृ० ) । |
| (च) पृथ्वीकोङ्गणी श्रीपुरुषो वा— | १ ( एपि० कर्णा० ६ वा० १५१ पृ० ३६ नं० ) |
| | २ ( माइसोर इन्स्क्रि० नं० १५२ पृ० २८४ ) |
| | ३ ( इ० आ० २ वा० १५६ पृ०; एपि० कर्णा० ४ वा० २३३ पृ० ८५ नं० ; एपि० इन्डि० ३ वा० १६४ पृ०; माइसोर इन्स्क्रि० नं० १५३ पृ० २८७) । |

यद्यप्यमीषु ताम्रशासनेषु महाराजहरिवर्मणः प्रथमे ताम्रपत्रे १६९ एकोनसप्तत्यधिकशतात्मकः(=२४७ ई०), द्वितीये च १८८ अष्टाशीत्युत्तरशतात्मकः (=२६६ ई०); विष्णुगोपमहाराजस्य ताम्रशासने २७२ द्वासप्तत्युत्तरद्विशतात्मकः (=३५० ई०); अविनीतस्य च द्वितीये ताम्रपत्रे ३८८ अष्टाशीत्यधिकशतत्रयात्मकः (=४६६ ई०) शाकाब्दिकः संकलनकालोऽङ्कितो वर्त्तते, तथापि तस्य गणितविरोधितया न प्रामाण्यमिति कीलहार्नमहाशयानां मतम्(१) ।

दुर्विनीतमहाराजेन तु द्वावपि लेखौ क्रमेण तृतीये पञ्चत्रिंशत्तमे च राज्यवर्षे लेखितौ ।

नवकामस्य प्रथमे ताम्रपत्रे ३४ पङ्क्तौ—

"पञ्चत्रिंशोत्तरषट्छतेषु ६३५ (=७१३ ई० ) शकवर्षेष्वतीतेष्वा-

(१) इ० आ० २४ वा० १० पृ० १६६ नं०, तथा ११ पृ० १६९ नं० ।

त्मनः प्रवर्धमानविजयैश्वर्यसंवत्सरे चतुस्त्रिंशत्के प्रवर्त्तमाने" इत्यङ्कनकालो वर्त्तते ।

पृथ्वीकोङ्गणिमहाराजस्य च प्रथमताम्रपत्रे—

"द्वासप्तत्युत्तरषट्छतेषु शकवर्षेष्वतीतेष्वात्मनः प्रवर्धमानविजयैश्वर्यसंवत्सरे वर्त्तमाने"......"वैशाखशुक्लपक्षदशम्यामुत्तराफाल्गुनीनक्षत्रे सोमवारे वृषभराशिसंक्रान्त्याम्" इति द्वासप्तत्युत्तरषट्शतात्मकः ६७२ (=७५० ई०), तृतीये च ६९८ अष्टनवत्युत्तरषट्शतात्मकः (=७७६ ई०) शाकाब्दिकोऽङ्कनकालो वर्त्तते ।

## २–काश्मीरकप्रकाशवर्षकृता लघुटीका ।

( ८७५–९२५ A. D. )

[ Taylor १, १७४; B. P. ५४, २६२, २७८, ३५६;
B. D. ३७७ ( खं० ); डि० म० कै०, वा० २० नं० ११४८१ । ]

काश्मीराभिजनस्य प्रकाशवर्षस्य पिता भट्टहर्षः, पुत्रश्च दर्शनीयाख्यो (१)दौर्लतिकादर्शनीयाख्यो वाऽऽसीत् । गौडकविर्भट्टनरसिंहपुत्रः प्रकाशवर्षस्य विद्यागुरुरासीदिति (२)जैसलमेरसूचीपत्रनिर्मातुर्मतम् ।

प्रकाशवर्षस्य निर्देशो मल्लिनाथेन तथा गदसिंहेन स्वकीयटीकायां (४ सर्गे १० श्लोके तथा टीकोपक्रमे च) एवं वल्लभदेवेन शिशुपालवधटीकायां विहितः ।

वल्लभदेवेन निगदितम्—

(क)"श्रुत्वा प्रकाशवर्षात्तु व्याख्यातं तावदीदृशम् ।
विशेषतस्तु नैवास्ति बोधोऽत्रानुभवादृते" [ चतुर्थसर्गटीका ]

---

( १ ) वल्लभदेवकृतसुभाषितावलि ११७२ श्लोके । तत्रैव च ११७१, २५०४, २५०५ संख्यासु श्लोकाः ।

( २ ) १९२३ ई० वत्सरे गायकवाडग्रन्थमालातः प्रकाशिते ।

(ख) "अत्राहोपाध्यायः प्रकाशवर्षः—'षष्ठीसमासोऽप्यत्र बहुव्रीह्यर्थेऽन्तर्भवत्येव । यो हि यस्य सखा तस्यासावपि भवत्येव" । एवमत्रापि । यथाह भारविः—'ओजसा खलु नूनमनूनम्'—„

[ २० सर्गे ७१ श्लोकटीका ] (१)

उक्तवर्णनद्वयेन प्रकाशवर्षो वल्लभदेवस्य गुरुरासीदिति प्रतीयते । अन्यथा "श्रुत्वा प्रकाशवर्षात्तु" इत्यादि वल्लभदेववचनं न संघटेत । एवं वल्लभदेवसमये निर्णीते प्रकाशवर्षसमयोऽपि विज्ञायेते· त्यादौ वल्लभदेवसमयो विचार्यते । वल्लभदेवस्य समयस्तावद् दशमशताब्दीप्रथमपाद इति निश्चेतुं शक्यते । वल्लभदेवस्य पौत्रः कैय्यटो हि कलिवर्षे ४०७८ ( ९७७ ई० ) आनन्दवर्धनस्य देवीशत(२)कस्तोत्रे वृत्तिमारचयत ।

तद् यथा—

"वल्लभदेवायनितश्चन्द्रादित्यादवाप्य जन्मेमाम् ।
कैय्यटनामाऽरचयद्वृत्तिं देवीशतकस्तोत्रे ॥
वसुमुनिगगनोदधि ४०७८ समकाले याते कलेस्तथा लोके ।
द्वापञ्चाशे वर्षे रचितेयं भीमगुप्तनृपे" ॥ इति ।

एवमत्र वल्लभदेवपौत्रस्य कैय्यटस्य समयात् पञ्चाशद् वर्षपूर्वं वल्लभदेवसमयोऽवगन्तव्यः । ततश्च प्रकाशवर्षस्यापि प्रायः ८७५–९२५ ई० पर्यन्तं जीवितकालस्वीकारे न काप्यनुपपत्तिः ।

मद्राससूचीपत्रे(३) या प्रकाशवर्षकृता किरातार्जुनीयलघुटीका

---

( १ ) इयं टीका साम्प्रतमेव काशीचौखम्भासंस्कृतग्रन्थमालायां प्रकाशिता ।

( २ ) देवीशतकवृत्तिः काव्यमालायां मुद्रिता ।

( ३ ) म० म० कुप्पुस्वामिसम्पादित मद्रासडिस्क्रिप्टिव् कैटोलाग् वाल्यूम २० नम्बर ११४८१ ।

विवृता वर्त्तते तस्या आदिमानि त्रीणि पत्राणि विनष्टानि। टीकाया अस्या विलोकनेन प्रकाशवर्षस्यानुपमं पाण्डित्यं प्रतीयते व्याकरणादिदुर्गमशास्त्रेषु !

एवं च तस्या व्याख्यायाः प्रतीकम्—

"......क्षितीतीत्वं दितं खण्डनं विगतं दितं यस्य विदितः अखण्डित इत्यर्थः ! एवं बहुव्रीहौ कृते निष्ठान्तस्य पूर्वनिपातेन भाव्यम्। उच्यते । निष्ठा......इत्येवोच्यते इति प्रदेशान्तरे भाष्यकारेणोक्तम्। पञ्च... ...तोऽस्येति। तस्मिन्प्रसङ्गे च क्तवतुप्रत्ययान्तेनाविधानात् समासो न प्रवर्त्तते। अतः परिशिष्टस्क्तप्रत्यय एव निष्ठाग्रहणेनावशिष्यते। अतो नान्योऽर्थो निष्ठाग्रहणेनेति निष्ठाग्रहणस्य प्रयोजनमवस्थापितं पदकारेण—निष्ठेत्यनया निष्ठा विहिता तत्र पूर्वनिपातो भवति । न चात्र निष्ठेत्यनया निष्ठा विहिता । तेन पूर्वनिपातो भविष्यति । अथवा वेत्तीति वित्। इतः समाययौ । द्वैतवने सरस्यवस्थितं युधिष्ठिरम्। द्वैतवन इति सामीप्येऽधिकरणसप्तमी । यथा गङ्गायां घोष इत्यादिवत्। वने चरतीति वनेचरः। चरेष्टः । तत्पुरुषेत्यादिना सप्तम्या अलुक्। अधुना समुदायार्थो निरूप्यते। कुरूणां सम्ब......श्रीस्तस्याः श्रियः पालिनी या वृत्तिः। प्रमाणविषयतां सतीत्यसतीति च वेदितुं यं वनेचरं युधिष्ठिरोऽन्वयुङ्क्त। स वनेचरो विदितो विदितवृत्तान्तो युधिष्ठिरं द्वैतवने सरस्यवस्थिते समाययौ समागतवान्" इति।

पं० वेङ्कटरामशर्मणा विद्याभूषणमहोदयेन प्रकाशवर्षप्रणीतः पञ्चपरिच्छेदात्मको रसार्णवालङ्काराभिधेयो ग्रन्थः इ० हि० क्वा० पत्रिकायां १९२९ मार्चमासे प्राकाशि। अलेखि चायं प्रकाशवर्षो भिन्नः किरातार्जुनीयव्याख्यातुः प्रकाशवर्षात् । द्वयोर्भेदप्रतिपादने च किमपि कारणं न प्रादर्शि । किन्त्विदमेव निरदेशि यद् रसार्णवालङ्कारकर्ता प्रकाशवर्ष आलङ्कारिकः, किरातकाव्यव्याख्याता तु कविरिति ।

असति प्रमाणप्राबल्ये नेदं समर्थयितुं शक्यम्। नचायं नियमो

यद् यः कविः स नालङ्कारिक इति । परं तु यः कविः स एवालङ्कारिक इति बहुत्र दृश्यते । तथा च दण्डी, भोजः, साहित्यदर्पणकर्ता विश्वनाथः, रसगङ्गाधरप्रणेता पण्डितराजो जगन्नाथश्चेति सर्वे एवालङ्कारिकाः काव्यकर्तृत्वेनापि प्रसिद्धाः । अतो विरोधिप्रमाणाभावात् सत्यपि नामैक्ये व्यक्तिद्वयकल्पनं क्लिष्टकल्पनामात्रमाग्रहमात्रं च ।

तत्र समयनिर्णयावसरे त्वेवमुक्तम्—

"यादृग् गद्यविधौ बा(१)णः पद्यबन्धे न तादृशः" इति प्रकाशवर्षकृताद् बाणभट्टस्य समुल्लेखनात् सिद्धमस्यार्वाचीनत्वम्, तथा चास्य भामहात् दण्डिनश्च प्राचीनत्वम् । भामहस्य काव्यालङ्कारेण प्रकाशवर्षकृतरसार्णवालङ्कारस्याधिकं सादृश्यं समुपलभ्यते ।

यथा—

"विनयेन विना का श्रीः का निशा शशिना विना ।
विना च श्लेषचित्राभ्यां कीदृशी वाग्विदग्धता" ॥

[ रसार्णवा० ३ परि० ८१ श्लो० ]

"विनयेन विना का श्रीः का निशा शशिना विना ।
रहिता सत्कवित्वेन कीदृशी वाग्विदग्धता" ॥

[ भामहा० २ परि० ४ श्लो० ]

| भामहालङ्कारे | रसार्णवालङ्कारे |
|---|---|
| ४ परिच्छेदे २० श्लोकः | १ परिच्छेदे ३३ श्लोकः |
| २ परि० ३ श्लो० | २ परि० ७ श्लो० |
| १ परि० १३ श्लो० | ३ परि० २ श्लो० |
| १ परि० ४ श्लो० | ३ परि० ८०–८१ श्लो० |

( १ ) इ० हि० क्वा० पत्रिकाया मार्च १९२९ वत्सरे प्रकाशिते रसार्णवालङ्कारे ३ परिच्छेदे ८७ श्लोके ।

एतेषां सर्वेषां श्लोकानां परस्परं समधिकं सादृश्यं विलोक्यते ।

दण्डिकृतकाव्यादर्शेण साकमपि रसार्णवालङ्कारस्य तादृश एव सम्बन्धोऽस्तीति तेन प्रतिपादितम् । स यथा—

"यत्नः सम्बन्धनिर्ज्ञानहेतुः कोऽपि कृतो यदि ।
कर्मभ्रंशमपि प्राहुर्न दोषं सूरयस्तदा" ॥

[ रसार्णवा० २ परि० २४ ]

"यत्नः सम्बन्धनिर्ज्ञानहेतुः कोऽपि कृतो यदि ।
कर्मलङ्घनमप्याहुः सूरयो नैव दूषणम्" ॥

[ काव्यादर्शे ३ परि० १४६ ]

| काव्यादर्शे | रसार्णवालङ्कारे |
|---|---|
| ३ परि० १३५ श्लो० | १ परि० ३२ श्लो० |
| २ परि० ८९ श्लो० | १ परि० ३४ श्लो० |
| १ परि० ७ श्लो० | २ परि० २ श्लो० |
| १ परि० ४५ श्लो० | २ परि० ७ श्लो० |
| १ परि० ४७ श्लो० | २ परि० ८ श्लो० |
| १ परि० ६९ श्लो० | २ परि० ९ श्लो० |
| २ परि० २७६ श्लो० | २ परि० २९ श्लो० |
| ३ परि० १४६ श्लो० | २ परि० ५३-५४ श्लो० |
| १ परि० ४३-४४ श्लो० | २ परि० ६७ श्लो० |
| ३ परि० १२८ श्लो० | २ परि० ७४ श्लो० |
| ३ परि० १४१ श्लो० | २ परि० ७६-७७ श्लो० |
| १ परि० ८८ श्लो० | २ परि० ७९ श्लो० |
| १ परि० ४८ श्लो० | ३ परि० १७ श्लो० |
| २ परि २५८-२५९ श्लो० | ४ परि० ११-१३ श्लो० |

२ परि० २६० श्लो०   ४ परि० १४ श्लो०
२ परि० २६८ श्लो०   ४ परि० १८ श्लो०
२ परि० २९९ श्लो०   ४ परि० १९-२० श्लो०

एषां श्लोकानामन्योन्यसामान्यात् पं० वेङ्कटरामशर्मणा सिद्धान्तितम्, प्रकाशवर्षो दण्डिभामहाभ्यां प्राचीनो बाणभट्टादर्वाचीनः ६१०-७५० ई० वत्सरे प्रादुरभवदिति, प्रकाशवर्षप्रणीते रसार्णवालङ्कारे यस्य (१)महाभामहस्य निर्देशः समवाप्यते, स तु भामहाद् भिन्न इति च ।

इमं पं० वेङ्कटरामशर्माभिप्रायमनभिप्रयन् डाक्टर सुशीलकुमारदेमहाभागः (२)प्रतिपादयति यत् भोजकृतसरस्वतीकण्ठाभरणे या वर्णनानुक्रमणी सैवात्र संगृहीतेति भोजराजादर्वाचीनः प्रकाशवर्ष इति । यद्यपि स वर्णनानुक्रमप्रणाल्या ग्रन्थसादृश्यसरण्या च ग्रन्थयोः पौर्वापर्यनिर्णयो न स्वतः संभवीति मनुते, तथापि स्वमतेऽभिनिविशमानः स भोजराजादर्वाचीनं प्रकाशवर्षमसिधत्ते ।

यथा चैतयोर्वर्णनाक्रमसादृश्यम्—

| सरस्वतीकण्ठाभरणे | रसार्णवालङ्कारे |
|---|---|
| १ पददोषाः (१६) प्रथमपरिछेदे | १ पददोषाः (१४) प्रथमपरिच्छेदे |
| २ वाक्यदोषाः (१६) ,, | २ वाक्यदोषाः (१४) ,, |
| ३ वाक्यार्थदोषाः (१६) ,, | ३ वाक्यार्थदोषाः (१६) ,, |

एषां दोषाणां नामधेयान्यपि समानानि । एवं डाक्टरसुशीलकुमारदेमहाशयः प्रकाशवर्षमेकादशशताब्दीस्थितभोजादुत्तरकालीनं मन्यते । एतत्तु प्रमाणाभावादनभ्युपगमार्हम् ।

वयं तु ब्रूमो यदयं प्रकाशवर्ष एव किरातार्जुनीयटीकाकारो नान्य इति । पं० वेङ्कटरामेण प्रकाशवर्षद्वयव्यवस्थापने न किमपि सा-

---

(१) यदाह महाभामहः—रसार्णवा० ३ परि० ३७ ।

(२) इ० हि० क्वा० १९२९ दिसम्बरमासे प्रकाशितपत्रिकायाम् ।

धकप्रमाणमुपस्थापितम् । प्रमाणाभावेऽपि व्यक्तिद्वयकल्पनं साहसमात्रम् । अन्यथा दशकुमारचरितकर्ता दण्डी कविरन्यः, काव्यादर्शकर्ता तन्नामधेयश्चान्य इति स्वीकारे को दोषः ।

किरातार्जुनीयटीकाकर्तुः प्रकाशवर्षस्य ८७५-९२५ ई० वत्सरमध्ये वर्त्तमानेन वल्लभदेवेन कृतात् "मयायमर्थः प्रकाशवर्षाच्छ्रुतः" इति निर्देशादनुमीयते प्रकाशवर्षो वल्लभदेवस्य गुरुरिति । तथाच ८७५-९२५ ई० वर्षेषु प्रकाशवर्षसत्ताभ्युगमने न कोऽपि विरोधः । एतेन भामहो दण्डी बाणश्च सर्वे प्रकाशवर्षात्प्राचीना इति स्पष्टम् । रसार्णवालङ्कारोद्धृतो महाभामहश्लोको भामहस्य काव्या(१)लङ्कारे न समधिगम्यते, परं तु महाभामहपदेन भामह एवोपादेय इति ममाभिप्रेतम् । मुद्रितोऽयं भामहकृतकाव्यालङ्कारः सकलावयवो नोपलभ्यत इत्यस्ति विदुषां निश्चयः ।

## प्रकाशवर्षस्य मुक्तकश्लोकाः ।

प्रकाशवर्षस्य मुक्तकश्लोका वल्ल(२)भदेवसुभाषितावलौ ४, २४८, २७३, २७४, ३२६, ४१७, ४१८, ४१९, ४२८, ४५९, ४८४, ५२२, ६२४, ७९७, ८३४, ८६०, ८६७, ८९९, ९२०, ९५९, ९८१, २३३५, २८७६, २८७७, २८७८, २८७९, ३११८, ३११९, ३१३५, संख्यासु, तथा चतुर्दशशताब्द्यां वर्त्तमानस्य शार्ङ्गधर(३)स्य पद्धतौ, सुभाषितरत्नभाण्डागारे च विलोक्याः ।

---

( १ ) प्रोफेसर पं० बटुकनाथ बलदेव एम० ए० सहित्याचार्याभ्यां सम्पाद्य काशीचौखम्बासंस्कृतग्रन्थमालायां मुद्रापितोऽयं ग्रन्थः ।

( २ ) अयं वल्लभदेवो हि शिशुपालवधटीकाकर्त्तुर्वल्लभदेवाद् भिन्नः । सुभाषितावलिः डा० पिटर्सन् सम्पादिता ।

( ३ ) डाक्टर पिटर्सन् सम्पादिता ।

## प्रकाशवर्षस्य ग्रन्थौ

### १ शिशुपालवधटीका—

वल्लभदेवकृतशिशुपालवधटीकायां संदेहविषौषध्यां ४ सर्गे तथा २० सर्गे ( ७१ श्लोके ) चोल्लिखिता ।

### २ रसार्णवालङ्कारः—

इ० हि० क्वा० पत्रिकायां १९२९ ई० मार्चमासे पं० वेङ्कटरामशर्मणा प्रकाशितः १–२९ पृष्ठेष्वन्तिमेषु ।

### ३—जोनराजकृता किरातार्जुनीयटीका ।

( १४४८ ई०. )

[ का० कै० ६७ पृष्ठे; बूलर रिपोर्ट ८; हुल्श ५२; B. P. ५४, २६२. ३५६ ]

काश्मीरकोऽयं जोनराजो यवनमहाराजजैनो(१)ल्लाभदेवसमये [ जिनअलावुद्दीन ] अविद्यत । जैनोल्लाभदेवश्च १४२२–१४७२ ई० वत्सरं यावत् काश्मीरान् शशासेतीति(२)हासवित्सु सुप्रथितम् ।

भट्टजोनराजेन किरातार्जुनीयव्याख्या [ खर्षिविश्वमिते शाके ] १३७० शाके(=१४४८ ई० ) वत्सरे निर्मिता [ द्रष्टव्यतां "कलेक्टेड. वर्क्स् आफ् सर. आर. जी. भण्डारकर" भा० २ पृ० ५२ ]

भट्टजोनराजस्य पितामहो लोलराजः, भट्टनोनराजश्च पितेति जया(३)नकविरचितपृथ्वीराजविजयमहाकाव्यव्याख्यातोऽवसीयते ।

---

( १ ) श्रीजैनोल्लाभदीने क्ष्मां संप्रत्यक्षति रक्षति ।
जोनराजाभिधस्तेषामुद्यतो वृत्तवर्णने ।
[ २ राजतरङ्गिणी ६ श्लोकः ]

( २ ) टाड्कृते राजस्थाने, तथा इन्दोरस्थसुखसम्पतिरायभण्डारीलिखिते "भारतके देशीराज्य" नामके पुस्तके च ।

( ३ ) यद्यपि पृथ्वीराजविजयकाव्ये कुत्रापि तत्कर्तुर्नाम नोपलभ्यते तथापि

यथा—

'श्रीलोलराजसुतपण्डितभट्टनोन-
राजात्मजो विवरणं व्याधितायसर्गे ।
आज्ञामवाप्य विदुषां किल जोनराजः
पृथ्वीमहेन्द्रविजयाभिधकाव्यराजे ॥ १ ॥

[ ए० सो० व० १९१४ ई० प्रकाशिता पृथ्वीराजविजयटीका ]

किं च काश्मीरभूमिपानामितिवृत्तं राजावल्यपराभिधे राजतरङ्गिणीग्रन्थे जागर्तीति नापरोक्षं केषामपि ।

राजतरङ्गिण्याश्चत्वारो भागाः । तत्र प्रथमा राजतरङ्गिणी [ अष्टतरङ्गात्मिका ] १०७० शाके (=११४८ ई० ) वत्सरे कविना कल्हणेन विरचिता । द्वितीया राजतरङ्गिणी १३३४ शाके (=१४१२ ई० ) वत्सरे जोनराजभट्टेन प्रणीता । एवं तृतीया राजतरङ्गिणी जोनराजशिष्येण (१)श्रीवरपण्डितेन १३९९ शाके (=१४७७ ई० ) वत्सरे रचिता । ततश्च प्राज्यभट्टेन चतुर्थी राजतरङ्गिणी १४८२ शाके (=१५६० ई० ) वत्सरे समापिता ।

भट्टजोनराजः ११३५ ई० वत्सरे वर्त्तमानमङ्खदासकृते श्रीकण्ठचरितमहाकाव्येऽपि विवृतिनामिकां टीकामारचयत् ।

इत्थं च जोनराजनिर्मिता ग्रन्थास्त्वेते—

१—पृथ्वीराजविजयकाव्यटीका—

[ बूलररिपोर्ट १० ; टीकेयं ए० सो० वं० द्वारा मुद्रिता ] ।

---

म० म० रायबहादुरगौरीशङ्करजीओझा महोदयाः "मध्यकालीन भारतीय संस्कृति" पुस्तके ७८ पृष्ठे तत्कर्तुर्नाम लिखन्ति ।

( १ ) शिष्योऽस्य जोनराजस्य सोऽहं श्रीवरपण्डितः ।
राजावलीग्रन्थशेषापूरणं कर्तुमुद्यतः ॥

[ ३ राजतरङ्गिणीसप्तमे श्लोके ]

२—राजतरङ्गिणी द्वितीया—

[ निर्णयसागरयन्त्रालयतः प्रकाशिता ]

३ —श्रीकण्ठचरितविवृतिः—

[ काव्यमालायां मुद्रिता ]

काश्मीरकवल्लभदेवेन सुभाषितावलौ राजानकजोनराजस्य त्रयः श्लोकाः संकलिताः । यथा—

विश्वस्य स्थितये धनुर्धरतया गर्जन्तमुच्चैः पदे
मेघं दन्तिमदान्तदुर्ललितधीर्मा सिंह लालिङ्घिषीः ॥
अस्माद्वज्रविदारितक्षितिभृतो मा पाति वर्षोपलै-
र्झम्पालम्पटभावभाविपतनाच्चिन्त्योऽङ्ग भङ्गः स्वयम् ॥

[ ६०४ संख्या ]

हुङ्कारैः स्तनितानुकारचतुरैर्न्यक्कारमाकारित—
क्षोणीभृच्छिखरश्रियो गजघटा नीत्वा मदाटोपिनीः ॥
सिंहः संहृतभावतो दश दिशः क्लिश्यत्सु दुर्वासितै-
र्गोमायुष्वपि विश्वविश्वविदितः प्रौढिः किमुद्गच्छते ॥

[ ६२१ संख्या ]

अनर्थितर्पणं वित्तं चित्तमध्यानदर्पणम् ।
अतीर्थसर्पणं देहं पर्यन्ते शोच्यतां व्रजेत् ॥ [ ३०३८ संख्या ]

अत्रोक्तश्लोकद्वये सिंहान्योक्ती, तृतीयपद्ये च धर्मकथा वर्णिता ।

अत्रायं संशयः । ११५६ ईशवीयवत्सरे वर्त्तमानोऽमरकोषटीकाकृत् सर्वानन्दो वल्लभदेवं समुल्लिलेख । तेन ११५९ ई० वत्सरात्पूर्वकालीनो वल्लभदेवः स्वग्रन्थे १४४८ ई० वत्सरे वर्त्तमानं जोनराजं समुट्टङ्कितवानिति कथं संभवेदिति । अत्र वयं ब्रूमः । सुभाषितावलौ जोनराजश्लोकाः केनापि प्रक्षिप्ताः, दशमशताब्दीमध्ये वर्त्तमानो जोनराजो भिन्नो वेति ।

## ४-विद्यामाधवकृता किरातार्जुनीयटीका ।

( १४७५-१५२५ ई० )

( डि० स० कै० वा० २० नं० ११४६३ )

अयं विद्यामाधवपण्डितो गुणवतीग्रामसमीपवर्त्तिनीलालयेऽन्यवसदिति किरातार्जुनीयटीकातः प्रतीयते ।

यथा—

"श्रीगुणवतीग्रामविशिष्टनीलालयस्थानसम्भूतैरखिलविद्यानिवासैर्विद्यामाधवपण्डितैर्विरचितं विद्यामाधवनामधेयं व्याख्यानं समाप्तम्" इति ।

विद्यामाधवस्याप्रतिमं वैदुष्यं वेदे व्याकरणे, काव्ये, तर्के, स्मृतौ, छन्दसि, नाटककलासु, ज्यौतिषे च सममेवासीदिति किरातटीकातः स्पष्टम् ।

"वेदव्याकरणास्पदं कविमहाराजः सतर्कस्मृति—
छन्दोलक्षणकाव्यनाटककलाविज्ञानसम्पन्निधिः ॥
ज्योतिःशास्त्रविदग्धमानजनिता दुर्गर्वसर्वंकषो
विद्यामाधवपण्डितो विजयते विद्वद्विभूषामणिः" ॥ १ ॥

[ किरातटीका ]

विद्यामाधवपण्डितेन "विद्यामाधवीयं मुहूर्त्तदर्शनं" ज्यौतिषग्रन्थरत्नं समुद्भावितम् । मुहूर्त्तदीपिका नाम्नी तट्टीका विद्यामाधवपुत्रेण विष्णुशर्मणा निर्मिता । ग्रन्थोऽयं महीशूरतः(माइसोर) डाक्टरश्यामशास्त्रिमहाशयेन १९२३ ई० वत्सरे सव्याख्य एव प्रकाशितः । एतद्ग्रन्थभूमिकायां डा० श्यामशास्त्रिमहाभागेन निगदितं यद् विद्यामाधवपुत्रो विष्णुशर्मा मल्लप्परायकाले टीकामिमां जग्रन्थेति । मल्लप्पमहाराजोऽयं १३५९-१३७९ ई० वत्सरे वर्त्तमा-

नस्य विजयनगराधीशस्य बुक्कमहीपतेस्तनूजः । एवं विद्यामाधव-श्चतुर्दशशताब्दीप्रारम्भे बभूवेति मन्तव्यम् ।

किन्तु श्यामशास्त्रिमहाभागस्येयमुक्तिः कमाधारमुपजीव्य प्रवृत्तेति नो जानीमः । मुहूर्त्तदर्शनटीकायां हि बुक्कपुत्रस्य मल्लप्पस्योल्लेखो न विद्यते । साम्प्रतं च ये विजयनगरस्येति-हासग्रन्थाः समुपलभ्यन्ते, तेष्वपि बुक्कपुत्रो मल्लप्प इति न प्राप्यते । डाक्टर राबर्ट सिविलमहोदयेन "ए फार्गाटन् अम्पायर आफ् विजयनगर" पुस्तके विजयनगरराजवंशपरम्परा चैवं समुद्धृता—




विद्यामाधवपुत्रो विष्णुशर्मा च मुहूर्त्तदीपिकायां यं स्वपरिच-यं प्राकाशयत् तदनुरोधेन विद्यामाधवपण्डितः १४७५-१५२५ ई०

(1) A Forgotten Empire ( Vijayanagar ), by Robert Sewell. 1924. London. P. 24 ।

वत्सरमध्ये आसीदिति सिद्ध्यति ।

बुक्कभूपस्य साम्राज्यलक्ष्मीं राममहाराजानन्तरं मल्लभूपोऽभुङ्क्त, यो हि शैवागमपर्यालोचने निपुणः शत्रुसादनप्रवीणश्चासीदिति मुहूर्त्तदीपिकायां विष्णुशर्मणा समुपवर्णितम् ।

यथा—

"श्रीमन्मल्ल(?)भूपः स जयति जगतीभूषणीभूतधामा
पारावाराचगाढक्षितिधरशिखरप्रस्फुरत्कीर्तिपूरः ॥
किं ब्रूमोऽस्य प्रतापं सुरपतिचकिताद्रीन्द्ररक्षातिदक्षः
श्रीभर्तुर्वासभूमिर्वितरति जलधिर्यस्य रत्नानि नित्यम् ॥ १ ॥
यः क्षात्रीमनुषङ्गिणीमनुपमां ब्राह्मीमजिह्मां निजां
लक्ष्मीं साधु बिभर्ति संश्रितजगत्संकल्पकल्पद्रुमः ॥
वैरिव्रातवधव्रती तदयशःपङ्काङ्कभूपालिका—
मातन्वन् वसुधां स्वकीर्तिविशदालेपोज्ज्वलां सोज्ज्वलाम्॥२॥
वीरश्रीधरबुक्कभूपतिमहासाम्राज्यलक्ष्मीकरा—
लम्बोदारचरित्रविक्रमरसस्थैर्यम्बकालस्खलनः ।
नीत्या निर्जितदैत्यनिर्जरगुरुप्रोद्दण्डदण्डद्विष—
न्मुण्डोत्खण्डनचण्डपण्डितकरः क्ष्मामण्डलाखण्डलः ॥ ३ ॥
शिवागमाचारविशुद्धचञ्चुः सदात्मविद्यापरिरब्धकन्धरः ।
समस्तसम्पत्कुलसंश्रयोऽयं भूपः क्षितिं रक्षति रामसूनुः ॥४॥
तदा तदास्थानगतो भुवि श्रुतः सुधीः सुधीरो धरणीसुराग्रणीः।
गुणानुरागी गुणवत्यधीश्वरप्रसादसम्पादितसम्पदुद्भवः॥५॥इति

विजयनगरे श्लोकोक्तोऽयं रामरायमहाराजो [सालुववंश्यः] १५४२–१५६५ ई० पर्यन्तं राज्यं चकार । ततो रामरायपुत्रस्तिरुमल्लभूपः १५६५–१५६७ई० पर्यन्तं राज्यं चक्रे । विद्यामाधवपुत्रो विष्णुशर्माऽस्यैव मल्ल[तिरुमल्ल]स्य संरक्षकत्वे बभूव। विद्यामाधवश्चास्माद्राज्ञस्तिरुमल्लात् पूर्वकालीन इत्यपि प्रतीयते। यथा चाग्रे निर्णेष्यते।

इदं चात्र विषये द्वितीयं प्रमाणम्—

विद्याश्रीधरो नैषधकाव्यटीकायां श्रीधरीयायां(१) विद्यामाधवपण्डितं स्वकुलालङ्कारत्वेन प्रदर्शयति स्म। अयं विद्याश्रीधरोऽपि गुणवतीग्रामनिवास्यासीत्। यथा—

शरणागतगीर्वाणपरित्राणपरायणः।
करुणामृतपर्जन्यः पायाद्गुणवतीश्वरः॥
श्रियं दिशतु वो देवः श्रीमान् गुणवतीश्वरः।
करुणामृतसन्दोहसिन्धुरिन्दुविभूषणः॥
अस्मद्वंशगुरुं नमामि महतो विद्यामहामाधव-
श्रीविद्याधरपण्डितौ च पितरं श्रीकेशवार्यं तथा॥
आचार्यं च कुमारशब्दमुदितस्वास्याख्यमेतत्सुतं
सूरिं केशवसंज्ञितं मम गुरुं विद्यानिधींस्तानिमान्॥ ३॥

इयं विद्याश्रीधरकृता नैषधटीका १४९०–१५०९ ई० वत्सरे निर्मितेति स्वीकारे न कोऽपि संशीतिलवः। विद्याश्रीधरस्य ज्येष्ठभ्राता गोविन्दसूरिर्हि साल्वमल्लभूपस्य समाश्रये स्वजीवनं यापयामास(२)। डिण्डिमकविराजनाथकृते—साळुवा(३)भ्युदयमहाकाव्ये

(१) ट्री० कै० म० वा० ३ पार्ट १ (C) २७९३ संख्यायां निर्दिष्टा।

(२) लक्ष्मीलक्ष्मीकृताङ्कः श्रितकृतिजनितापारिजातप्रभावः
प्रह्वः प्रौढः क्षमाभृद्धृतिकृदनिकृतिर्धर्मशर्मैकहेतुः।।
वर्धिष्णुर्भूष्णुरीड्यस्त्रिभुवनभवनप्रस्फुरत्कीर्तिपूर्तिः
सन्मूर्तिः सत्यभामापतिरिव रमते साल्वमल्लावनीन्द्रः।
तस्यास्थानगतो बुधो विजयते गोविन्दसूरिर्महान्
विद्याश्रीधरदेवसूरिरपरो ह्येतत्कनीयानहम्।।
स श्रीमद्गुणवत्यधीशचरणाम्भोजालिमौलिर्महान्
त्रिस्कन्धार्थविशारदोरुजनतामानान्धकारारुणः।। (श्रीधरनैषधटीका)

(३) डि० म० कै० वा० २० नं० ११८१८।

चन्द्रगिरिमहाराजस्य सालुववंशोद्भवस्य नरसिंहदेवरायस्य वर्णनं प्रस्तुतम्। नरसिंहदेवरायो विजयनगराधीशं विरूपाक्षं युद्धे विजित्य विजयनगरराज्यलक्ष्मीं स्वायत्तामकरोत्। स्वपराक्रमार्जितराज्यलक्ष्मीकोऽयं सालुववंशस्य कीर्तिवैजयन्तीं संसारे समारोपितवान्। अत एवास्यापराख्या सालवमल्ल ( सालवकुले मल्लः ) इति पप्रथे।

यथा सालुवाभ्युदयपुष्पिकायाम्—

"इति रायशूरमल्लविरुदगुण्डयनरसिंहमहाराजचरिते कविमल्लगल्लताडनपटुडिण्डिमकविराजनाथविरचिते सालुवाभ्युदये दशमः सर्ग" इति॥

अत्र काव्ये सालुववंश्यनरसिंहदेवरायस्य वंशपरम्परा चेत्थम्—




नरसिंहदेवरायानन्तरं चेयं वंशपरम्परा "ए. फा. ए. वि." पुस्तके ४०४ पृष्ठे इत्थं समुपलभ्यते।

१—नरसिंहदेवरायः वीरनरसिंहो वा—

१४९०–१५०९ ई० वत्सरं यावत् राज्यकालः। अयमेव हि नैषधटीकाकारश्रीधरस्य ज्येष्ठभ्रातुर्गोविन्दसूरेः संरक्षकः।

२—कृष्णदेवरायः—१५०९—१५३० ई०।

३—अच्युतदेवः—१५३०—१५४२ ई०।

४—सदाशिवः—१५४२—१५६७ ई०। अयं कारागारे बद्धः। १५४२—१५६५ ई० वत्सरं यावद्रामरायेण राज्यं कृतम्। ततश्च १५६५—१५६७ ई० वत्सरं यावत्तिरुमल्लेन राज्यप्रबन्धो विहितः।

५—तिरुमल्लः--१५६७--१५७५ ई० । विद्यामाधवपुत्रस्य विष्णुशर्मणः संरक्षकः ।

६—रङ्गः ( द्वि० ) १५७५--१५८६ ई० ।

७—वेङ्कटः ( प्र० ) १५८६—१६१४ ई० ।

गोविन्दसूरिः (नैषधटीकाकर्तुः श्रीधरस्य भ्राता) नरसिंहदेवरायराज्ये (१४९०–१५०९ ई०वत्सरे) बभूव । तस्य कनिष्ठभ्रातुः श्रीधरस्य समयोऽपि स एव । श्रीधरश्च विद्यामाधवं स्वकुलालङ्कारं वर्णयते ।

विद्यामाधवपण्डितपुत्रो विष्णुशर्मा तिरुमल्लराज्ये १५६५--१५६७ ई० वत्सरेऽवर्त्ततेति प्रागेवोक्तम् । ततश्च विद्यामाधवसमयः १४७५–१५२५ ई० पर्यन्तमिति वक्तुं शक्यते ।

विद्यामाधवो मल्किभट्टवंश्यो वसिष्ठगोत्रो दाक्षिणात्यब्राह्मण आसीदिति विद्याश्रीधरेण नैषधीयचरितटीकायां वर्णितम् । विष्णुशर्मा च मुहूर्तदीपिकायां विद्यामाधवस्य प्रधानान्तेवासिनो नारायणस्यापि समुल्लेखं कृतवान् । यथा--

तदङ्घ्रिसेवासमवाप्तविद्यो विभाति नारायणपूज्यपादः ।
विजहतुर्यत्र विमुक्तवैरे चिराय वाणीकमले समेते ॥ इति ।

## विद्यामाधवस्योपलब्धा वंशपरम्परा ।



किरातार्जुनीयटीकाया विद्यामाधव इति संज्ञा क्लृप्ता। स्वटीकाया महत्त्वमपि टीकाकृता वर्णितम् । उक्तं चैतट्टीकानौकामादाय भारविकाव्यसागरस्तरीतुं शक्यः, एतादृशी टीका न केनापि कृता करिष्यते चेति ।

यथा च टीकामङ्गलाचरणम्--

आद्यावानन्दिनौ नित्यमाश्लिष्टाविष्टदायिनौ ।
दिव्यौ तौ संयुतौ वन्दे दम्पती जगतास्पती ॥

टीका-पुष्पिका—

विद्यामाधवपण्डितविहितव्याख्याननावमादाय ।
भारविकाव्यसमुद्रं दुस्तरमपि निस्तरन्तु जनाः ॥
सद्विद्याकुलमन्दिरेण गुणिना विद्वज्जनप्रेयसा
विद्यामाधवपण्डितेन रचिते विद्यावतां संमते ॥
विद्यामाधवनाम्नि भारविकविव्याख्यानवर्येऽभवत्
पूर्णः पार्थतपःफलाप्तिकथनः सर्गोऽयमष्टादश ॥
व्याख्यानमीदृगिदमस्य करोति नान्यो
नैवाकरोन्न च करिष्यति पण्डितोऽपि ॥
तस्मादिह स्खलितमस्ति यदि प्रमादात्
तत् साधवः कृतधियो गुणिनः क्षमन्ताम् ॥

इति श्रीमद्गुणवतीग्रामविशिष्टनीलालयस्थानसंभूतैरखिलविद्यानिवासैर्विद्यामाधवपण्डितैर्विरचितं विद्यामाधवनामधेयं व्याख्यानं समाप्तम् ।

## विद्यामाधवग्रन्थाः—

( १ ) कुमारसंभवटीका ( विद्यामाधवीया ) ।
( ट्री० कै० म० वा० २ पार्ट १ ( C ) नं० १८५३ )

( २ ) माघकाव्यप्रकाशिका ( शिशुपालवधटीका )।

( ट्री० कै० म० वा० ३ पार्ट १ ( C ) नं० २७४३ )

( अत्र विद्ग्धमाधव इति नामान्तरं प्राप्यते )

( ३ ) विद्यामाधवीयं मुहूर्त्तदर्शनम्।

( महीशूरतः श्यामशास्त्रिणा १९२३ ई० वत्सरे प्रकाशितम्।

## ५—पृथुनाथकृता किरातार्जुनीयटीका।

( १४६५ ई० वत्सरतः पूर्वकालीना )

( डेक्कनकालेज )

टीकेयं पञ्चदशसर्गान्तोलभ्यते। अस्यां लिपिसमयः १५२२ (=१४६५ ई० ) वत्सरो लिखितः। एतद्व्याख्यापुस्तकं पुण्यपत्तनीयडेक्कनकालेजविद्यालये विद्यते।

## ६—कोलाचलमल्लिनाथकृता-घण्टापथाख्या व्याख्या।

( १५०० ई० )

( मुद्रितेयं टीका )

काश्यपगोत्रोत्पन्नोऽयं कोलाचलमल्लिनाथः कर्णाटकदेशान्तर्गते गजेन्द्रगडहाख्ये ग्रामे निवासमकुरुत। साम्प्रतमपि मल्लिनाथवंश्यास्तत्र ग्रामे निवसन्तीति झलकीकरोपाह्वो वामनाचार्यः काव्यप्रकाश-(१)भूमिकायां वर्णयामास।

म० म० दुर्गाप्रसादमहोदयः काव्यमालासम्पादकः किरातार्जुनीयभूमिकायां(२) "दाक्षिणात्योऽयं मल्लिनाथस्तलङ्गाभिजनः" इति समगिरत।

---

( १ ) का० प्र० भूमिका २८ पृ० ( १९०१ ई० )।

( २ ) बम्बई निर्णयसागर प्रेस।

(१)तार्किकरक्षाभूमिकायां भूतपूर्वसरस्वतीभवनपुस्तकालयाध्यक्षः पं० विन्ध्येश्वरीप्रसादद्विवेदिमहाभागश्चित्रकूटवास्तव्योऽयं मल्लिनाथ इति निर्णीतवान्। मल्लिनाथस्य खलु "कोलाचलः" इत्युपाधिः समधिगम्यते। स च कोलाचलश्चित्रकूटपर्वतसमीपेऽवर्त्ततेति महाभारतान्मार्कण्डेयपुराणाच्च प्रतीयते।

यथा—

"वंशे चक्रे महातेजा दण्डकांश्च महाबलः।
सागरद्वीपवासांश्च नृपतीन् म्लेच्छयोनिजान्॥
निषादान् पुरुषादांश्च कर्णप्रावरणानपि।
ये च कालमुखा नाम नरराक्षसयोनयः॥
कृत्स्नं कोलगिरिं चैव सुरभीपट्टणं तथा।
द्वीपं ताम्राह्वयं चैव पर्वतं रामकं तथा"॥ इति।

( महाभारतसभापर्व० ३० अध्याये )

"चोलाः कोलगिराश्चैव क्रौञ्चद्वीपा जटाधराः।
कावेरा ऋष्यमूकस्था नासिक्याश्चैव ये जनाः"॥ इति च।

( मार्कण्डेयपु० कूर्मनिवेशाध्याये )

एतेषु श्लोकेषु रामगिरिऋष्यमूकपर्वतयोर्वर्णनेन कोलगिरि( कोलाचलः ) रपि रामगिरेः (चित्रकूटस्य)समीपस्थप्रदेशवर्त्तीति माननीयम्।

अत्र विषये तत्प्रदर्शितं द्वितीयं प्रमाणं त्विदमेव यन्मल्लिनाथपुत्रो वीरभद्रः १६३३ विक्रमवत्सरे चित्रकूटसमीप एव (२)दुर्गासप्तशतीटीकां निर्मितवानिति।

( १ ) काशी मैडिकलहाल यन्त्रालयतः प्रकाशितायाम्।

( २ ) वर्षे रामाङ्कचन्द्रे शिवनयनयुते ( १६३३ ) चित्रकूटोपकण्ठे।
चक्रे चण्डीप्रसादात्प्रतिपदममलं भावयंस्तत्पदाब्जम्॥

[ तार्किकरक्षाभूमिका ]

अतो मल्लिनाथश्चित्रकूटसमीपवर्त्तिकोलाचलनिवासीति निश्च-प्रचम् । मन्मते त्वयं दाक्षिणात्य एव प्रतिभाति ।

कः कालो मल्लिनाथस्येति विचारे प्रस्तूयमाने केचनाधुनिका ब्रुवते—१६६० ई० वत्सरे वर्त्तमानस्य केशवस्य कोशो ( कल्पद्रुः ) मल्लिनाथेन किरातार्जुनीयटीकायां ( २. २१; ८. २५; ६. ७७ ) प्रमाणत्वेनोद्धृत इति कोशकारादस्मादर्वाचीनोऽयं व्याख्याकृदिति ।

तदिदं न रमणीयम् । केशवकल्पद्रुकोशे मल्लिनाथोद्धृतवचनानामनुपलम्भात् । नानार्थार्णवसंक्षेपकोशकृदन्योऽपि कश्चित्केशवस्वामी संस्कृतवाङ्मये लब्धख्यातिको मल्लिनाथस्य निर्देशविषयो न वेति न स्पष्टम् । अष्टमसर्गटीकायां समुद्धृते वचनेऽल्पीयसा पाठभेदेन नानार्थार्णवसंक्षेपे समुपलभ्यमानेऽपि तदितरवचनद्वयस्य तत्रैव सर्गान्तरयोः समुद्धृतस्य केशवस्वामिनो ग्रन्थे कुत्राप्यनधिगमात् ।

रघुवंशटीकायां (१. ४) तु केशवनाम्ना समुद्धृतं वचनं तद्ग्रन्थे (नानार्थार्णवसंक्षेपे) यथावदेव समुलभ्यत इति नानार्थार्णवसंक्षेपकर्तुः केशवादधस्तनोऽयं मल्लिनाथ इत्यभ्युपेयम् ।

सोऽयं नानार्थार्णवसंक्षेपकर्ता केशवस्वामी द्वादशशतकस्थितचौलदेशाधिपकुलोत्तुङ्गपुत्रस्य राजराजस्य, त्रयोदशशतकपूर्वार्धस्थितापरकुलोत्तुङ्गसूनुराजराजस्य वा समाश्रये बभूवेति त. |गणपतिशास्त्री मन्यते ( नानार्थार्णवसंक्षेपभूमिका १९२३ ई० ) ।

मल्लिनाथसमयं डाक्टरसुशीलकुमारदे(१) महाशयः के. पी. त्रिवेदिपण्डितस्य,(२) तथा (३)भण्डारकरमहाभागस्य मतानुकूल्येन चतुर्दशशताब्दीचरमभागं निर्दिष्टवान् ।

---

( १ ) हिस्ट्री आफ संस्कृतपोइटिक्स् २२८ पृष्ठे प्रथमभागे ।

( २ ) एकावलीभूमिका ।

( ३ ) मालतीमाधवभूमिका ।

मल्लिनाथात्मजेन वीरभद्रेण १६३३ विक्रमवत्सरे (=१५७५ ई०) दुर्गासप्तशतीव्याख्याप्रणयनादेतस्य समयं पञ्चदशशताब्दीचरमभागं सरस्वतीभवनपुस्तकलयाध्यक्षः स्वर्गीयविन्ध्येश्वरीप्रसादमहाभागो मनुते । प्रमाणपुष्टमेतदेव च स्वीकारार्हम् ।

अत्र केचिदाशेरते-मल्लिनाथकृतभट्टिकाव्यटीकायां सर्वपथीनायां भट्टोजिदीक्षितकृतसिद्धान्तकौमुदीसमुल्लेखः प्राप्यते । भट्टोजिदीक्षितश्च सप्तदशशताब्दीमध्ये बभूवेति स्थिरम् । एतेन मल्लिनाथः सप्तदशशताब्द्या अधस्तन इति सिद्ध्यति ।

यथा च सर्वपथीनायां कौमुदीनिर्देशः—

"कौमुद्यां तु ततोऽनुजज्ञ इति पाठमनुसृत्य 'अनुपसर्गाज्ज्ञः'— इति शास्त्रप्रातिकूल्यमुद्भाव्य नृप इत्यत्र नृपेणेति विपरिणामं कृत्वा दोषपरिहारः कृतः" ( १. २३ ) । "कौमुद्यां तु सम्भोगस्यृच्छिभ्यामिति पाठः" ( ८. १६ ) ।

अस्मात्कौमुदीनिर्देशादर्थपर्यालोचनानुसन्धानाभ्यां भट्टोजिदीक्षितकृतायाः सिद्धान्तकौमुद्या एवोपादानम् , न तु पञ्चदशशतकस्थितरामचन्द्रकृतयाः प्रक्रियाकौमुद्याः ।

तत्रोच्यते—

अयं भट्टिटीकायां कौमुदीनिर्देशो लेखककृतः प्रमादरूपः । यत्र यत्र भट्टिटीकायां व्याकरणविषयो मल्लिनाथेन निर्दिष्टस्तत्र तत्र काशिकावृत्तिरेवोपजीव्यत्वेन गृहीतेति सुस्पष्टम् ।

यथा —"सुतानुबन्धि" ( १ सर्ग ११ ) इत्यत्र काशिकावृत्त्याधारेणैव "इनि" प्रत्ययो व्याख्यायां लिखितः, न तु कौमुदीसमाश्रयेण णिनिप्रत्यय इति । यथा वा "उपायंसत" (१ स० १६) इत्यत्र "उपाद्यमः स्वकरणे" इत्यात्मनेपदम् । "स्वकरणं पाणिग्रहणम्" इति व्याख्यानेन मल्लिनाथेन काशिकासंमतः पाणिग्रहणार्थ एव स्वीकृतः, न तु कौमुदीसमाश्रयेण 'स्वकरणं स्वीकारः, इति । तथैव—"का-

इप्रत्ययादाममन्त्रे लिटि" ( ३।१।३५ )—इत्यस्य सूत्रस्य वार्त्तिकं "कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थम्" इति, "बहुव्रीहौ संख्येयेऽज् बहुगणात्" (५।४।७३) एतस्य वार्तिकं—"डच्प्रकरणे संख्यातत्पुरुषस्योपसंख्यानं कर्त्तव्यं निस्त्रिंशाद्यर्थम्" इति च मल्लिनाथः काशिकात एव समुद्धृतवान्, न तु कौमुदीत इति ।

भट्टिकाव्यटीकायामिमं कौमुदीनिर्देशं लेखकप्रमादरूपममन्वानाः केचन पञ्चदशशतकवर्त्तिनो रघुवंशादिटीकाकारादयं सप्तदशशतकवर्त्ती भट्टिकाव्यटीकाकारो मल्लिनाथो भिन्न एवेति ब्रुवते ।

तन्न रुचिरम् । यतो भट्टिकाव्यटीकायामेव लिखितं मल्लिनाथेन "इत्यादि प्रपञ्चितमस्माभिः किरातार्जुनीयव्याख्याने घण्टापथेऽर्थगौरवमित्यत्रोपरस्यते" ( १ सर्गे ९, श्लोके ) इति । यथा वा भट्टिकाव्यस्य १४ सर्गे ३४ श्लोके, ५ सर्गे ४३ श्लोके च कुमारसंभवसंजीविन्याः, १ सर्ग २५ श्लोके रघुवंशसंजीविन्याश्च नामोल्लिखितम् । एतेनायं भट्टिकाव्यटीकाकारः किरातादिटीकाकारश्च मल्लिनाथोऽभिन्न एव ।

इत्थं मल्लिनाथः पञ्चदशशताब्दीमध्ये बभूवेति निर्णीतं भट्टिकाव्यभूमिकायां कमलाशङ्करत्रिवेदि बी० ए० महाभागेनापि ।

मल्लिनाथनामधेया अनेके पुरुषा आसन्निति तार्किकरक्षाभूमिकायां द्रष्टव्यम् । पं० विन्ध्येश्वरीप्रसादशर्मा द्विवेदी महाशयस्तार्किकरक्षाभूमिकायां मल्लिनाथस्य गिरिनाथः कुमारस्वामी विश्वेश्वरो भीमसेनो वीरभद्र इति पञ्च पुत्रा आसन्निति लिलेख ।

एषु प्रथमो गिरिनाथो नृसिंहकृतस्वरमञ्जर्य्याष्टीकां निर्ममे । टीकेयं ट्री० कै० म० ३४८८ संख्यायां विवृता । कुमारस्वामी विद्यानाथकृतप्रतापरुद्रयशोभूषणटीकां रत्नाप(१)णाख्यां प्रणीतवान् । तत्र च प्रारम्भे मल्लिनाथस्य ज्यौतिषविद्यानैपुण्यमपि प्रदर्शितवान् ।

---

( १ ) टीकेयं बम्बईनगरे, पुण्यपत्तने मद्रपुरे च मुद्रिता ।

यथा—

त्रिस्कन्धशास्त्रजलधिं चुलुकीकुरुते स्म यः ।
तस्य श्रीमल्लिनाथस्य तनयोऽजनि तादृशः ॥

तस्य तृतीयचतुर्थपुत्रयोर्विश्वेश्वरभीमसेनयोर्न कोऽपि ग्रन्थः समुपलभ्यते । वीरभद्रश्च १६३३ वत्सरे (=१५७६ ई०) दुर्गासप्तशतीव्याख्यां चकार ।

मल्लिनाथवंशोद्भवेन वेङ्कटनारायणेन पदयोजनिकाभिधे चम्पूरामायणव्याख्याने स्वीया वंशानुक्रमणीत्थं समुल्लिखिता ।




(१) कोलचल्मान्वयेन्दुः श्रीमल्लिनाथो महायशाः ।
शतावधानविख्यातो वीररुद्राभिपूजितः ॥

सोऽयं वंशानुक्रमः कुमारस्वामिना प्रतापरुद्रयशोभूषणव्याख्याने

मल्लिनाथात्मजः श्रीमान्कपर्दी मन्त्रकोविदः ।
अखिलश्रौतकल्पस्य कारिकावृत्तिमातनोत् ॥
कपर्दितनयो धीमान् मल्लिनाथोऽग्रजः स्मृतः ।
द्वितीयस्तनयो धीमान् पेद्दुभट्टो महोदयः ॥
महोपाध्याय आख्यातः सर्वदेशेषु सर्वतः ।
मातुलेकृयतौ दिव्ये सर्वज्ञेनाभिवर्पितः ॥
गणाधिपप्रसादेन प्रोचे मन्त्रगणान्बहून् ।
नैषधज्यौतिषादीनां व्याख्याताभूज्जगद्गुरुः ॥
पेद्दुभट्टसुतः श्रीमान् कुमारस्वामिसंज्ञकः ।
प्रतापरुद्रीयाख्यानविख्यातो विद्वदग्रिमः ॥
तनयास्तस्य चत्वारो महादेवस्तदग्रजः ।
महादेवात्मजः शम्भुः सप्ततन्तुभिरिष्टवान् ॥
ततो विश्वजितं कृत्वा यज्ञं सर्वस्वदक्षिणम् ।
शम्भुयज्वात्मभूर्विद्वान्भास्करो भास्करप्रभः ॥
श्रीनागेश्वरयज्वाख्यो भास्करस्यात्मसंभवः ।
पुत्राः पौत्राश्च दौहित्राश्चत्वारो वेदवेदिनः ॥
जामातरोऽपि चत्वार एतैर्निर्वर्त्तिताध्वरः ।
सर्वतोमुखपादमातेः (?) सर्वक्रतुभिरिष्टवान् ॥
तस्यात्मजः कौण्डुभट्टो द्वितीयो वेदवित्कविः ।
श्रीनागेश्वरयज्वाख्यः कौण्डुभट्टसुतः सुधीः ॥
नरसक्काख्यवध्वाश्च श्रीनागेश्वरयज्वनः ।
नारायणेन पुत्रेण कोलचलमान्वयेन्दुना ॥
चम्पूरामायणाख्यस्य प्रबन्धस्यावहारिणः ।
विवृतिः क्रियते प्रेम्णा यथामति समासतः ॥

( वादीभसिंहकृतनक्षत्रचूडामणिभूमिका ६–७ पृष्ठयोः )

रत्नापणे प्रतिपादितेन वंशक्रमेण विरुद्धत्वादश्रद्धेय इति के० पी० त्रिवेदिमहाभागानामभिमतम्(१) ।

कुमारस्वामिना चैवं प्रतिपादितं रत्नापणे—

मल्लिनाथः
|
पेद्दयार्यः — कुमारस्वामी

अयं च मल्लिनाथो न्याये वैशेषिके वैयासिके मीमांसायां योगे व्याकरणे ज्यौतिषे काव्यसाहित्ययोश्च परं प्रावीण्यं समधिजगामेति विदुषोऽस्य पाण्डित्यपरिचायनं पिष्टपेषणमिति विरम्यते ।

किरातार्जुनीयटीका घण्टापथाख्या मल्लिनाथेन रघुवंशव्याख्यायाः संजीविन्याख्याया अनन्तरं प्रणीतेति ११ सर्गीय ७८ श्लोकटीकातः प्रतीयते ।

किरातार्जुनीयव्याख्याया घण्टापथ इति नामधेयं मल्लिनाथेन टीकाप्रारम्भिकश्लोके निर्दिष्टम् । यथा—

नानानिबन्धविषमैकपदैर्नितान्तं
लाशङ्कचंक्रमणखिन्नधियामशङ्कम् ।
कर्तुं प्रवेशमिह भारविकाव्यबन्धे
'घण्टापथं' किमपि नूतनमातनिष्ये ॥

इयं व्याख्या बम्बई निर्णयसागरयन्त्रालयतोऽनेकवारं मुद्रितेत्यस्या विशेषार्थप्रकाशने यत्नो न कृतः ।

## मल्लिनाथग्रन्थाः—

१—अमरपदपारिजाताख्या-अमरकोषटीका ( ट्री० कै० म०, वा० २, पार्ट १ (C), १९३० a संख्या; मैसूरकैटोलाग् ९ ) ।

२—उदारकाव्यम् ( ? ) (बम्बई प्रकाशिते बूलरसूचीपत्रे २.७२ ) ।

( १ ) प्रतापरुद्रयशोभूषणभूमिका ४४ पृष्ठे ।

३--जीवातुः--नैषधटीका ( मुद्रिता ) ।

४—तरला—एकावलीटीका (के० पी० त्रिवेदिना १९०३ ई० वर्षे बम्बईतः प्रकाशिता ) ।

५—नक्षत्रपाताध्यायः--( ज्यौतिषग्रन्थः ) ( ट्री० कै० म०, ३ वा०, १ पार्ट B, सं० २३८७ b. ) ।

६—नलोदयटीका(१) ( डि० म० कै० सं० ११८४६ वा० २० ) ।

७--निष्कण्टिका—वरदराजकृततार्किकरक्षाटीका ( काशीमेडिकलहालयन्त्रालयतः प्रकाशिता ) ।

८—रघुवीरचरितकाव्यं(२) ( आपेटसूचीपत्र सं० ६१५८ ) ।

९—संजीविनी—कुमारसंभवटीका, १ सर्गतः ८ सर्गान्ता (मुद्रिता) ।

१०--- ,, — मेघदूतटीका ( मुद्रिता ) ।

११-- ,, — रघुवंशटीका ( मुद्रिता ) ।

१२--सर्वंकषा-शिशुपालवधटीका ( मुद्रिता ) ।

१३--सर्वपथीना-भट्टिकाव्यटीका ( बम्बईतो भण्डारकरग्रन्थमालायां प्रकाशमिता ) ।

---

( १ ) काव्यमिदं नारायणभट्टपुत्रेण रविदेवेन निर्मितमिति निर्णीतं मया जोधपुरतः प्रकाशिते "अखिलभारतवर्षीयश्रीदाहिमाब्राह्मणमहासभाया "दधिमथी" नामके मासिकपत्रे १९२९ दिसम्बराङ्के ४२ पृष्ठे ।

( २ ) त० गणपतिशास्त्रिणा—अनन्तशयनग्रन्थावलौ सप्तदशसर्गमयं रघुवीरचरितमहाकाव्यं ग्रन्थकर्तृनामशून्यं प्रकाश्य भूमिकायां लिखितम्—यदिदं काव्यं डाक्टरआफ्रेक्ट्मतानुसारेण मल्लिनाथनिर्मितं चेत्तदिदं काव्यं मल्लिनाथेनैकावलीटीकानिर्माणान्तरं निर्मितम् । अन्यथा मल्लिनाथ एकावलीटीकायां तरलाख्यायां काव्यस्यास्य श्लोकान् लक्ष्यत्वेन कथं नोदधरत् इति ।

## ७—गदसिंहकृता किरातार्जुनीयटीका।

( १२००-१६०० ई० )

( मित्र २१४० संख्या )

गदसिंहो नानार्थध्वनिमञ्जरी (=अनेकार्थध्वनिमञ्जरीं) मष्टाधिकाशीतिश्लोकैर्निरमात्। तत्र च "रुद्रः, गङ्गाधरकोषः, धरणिः, रत्नकोषः" इत्येतेषां नामानि निरदिशत्। एतेषु रुद्रस्य समयो हि ११५९ ई० वत्सरतः पूर्वकालीनः। यतः सर्वानन्दकृतेऽमरकोषव्याख्याने 'टीका(१)सर्वस्वे' "पत्रे पलाशं ना रक्तः शटीहरितकिंशुके" इति तालव्यान्ते रुद्रः। तथा "शण्डः स्याद्विटूचरेऽञ्जादिकदम्बे शण्डमस्त्रियाम्" इति तालव्यादौ डान्ते रुद्रः" इत्यादिसंदर्भेण रुद्रस्य समुल्लेखो वर्त्तते। सर्वानन्दोऽयं टीकामिमां १०८१ शाकवत्सरे (=११५९ ई० वत्सरे) प्राणैषीत्।

किंचैवमेव रत्नकोषसमुल्लेखोऽपि टीकासर्वस्वे समधिगम्यते ३ काण्डे ६, २८ पृष्ठे च। धरणिदाससमयोऽपि म० म० रामावतारपाण्डेय एम० ए० महाभागेन केशवकृतकल्पद्रुकोषभूमिकायां सर्वानन्दसमय एव निर्णीतः। अपि च—गदसिंहनिर्देशो रघुनन्दनेन षोडशशताब्दीस्थितेन विहित इति गदसिंहसमयः—१२००-१६०० ई० वत्सरमध्ये माननीय इति रामावतारमहाभागः केशवकल्पद्रुभूमिकायां ( ४२पृष्ठे ) निर्णिन्ये।

ऊष्मविवेकनामके ग्रन्थे च गदसिंहनिर्देशो वर्त्तते स च ग्रन्थ एकादशशताब्दीमध्यभागे समुपस्थितस्य पुरुषोत्तमदेवस्योष्मभेदग्रन्थतो विभिन्न इति पर्यालोचेलिमम्।

---

( १ ) १९१५ ई० वत्सरे अनन्तशयनग्रन्थावलौ प्रकाशिते-क्षीरस्वामिव्याख्यायुतेऽमरकोषसंस्करणे।

पं० रामनाथविद्यावाचस्पतिमहाभागोऽपि त्रिकाण्डविवेकेऽमरकोषव्याख्याने गदसिंहं प्रमाणत्वेनोद्धृतवान् । स च त्रिकाण्डविवेको १६३३ वत्सरे विरचित इति दृश्यतां जेड्० डी० एम० जी० पत्रिकायाः २८ भागे १२३ पृष्ठम् ( Z. D. M. G. )। इत्थं गदसिंहस्य समयः १२००–१६०० ई० वत्सरमध्ये बभूवेति निश्चेलिमम् ।

गदसिंहस्य ज्येष्ठो भ्राता सिंहसिंह एव विद्यागुरुः । टीकेयं गदसिंहेन स्वभ्रातृजादीनां स्मरणार्थं लिखिता । अत्र टीकायां प्रकाशवर्षकृतलघुटीकासमुल्लेखः कृतः । भारवेः प्राणदेव इत्यपराख्यापि विख्यापिता । यथा टीकोपक्रमे—

"सन्ति प्रकाशवर्षादिटीका अपि सुविस्तराः ।
तथापि लघुबोधार्थं गदसिंहोऽकरोदिमाम् ॥ १ ॥
पितृकल्पाद्यथाधीतं भ्रातुः श्रीसिंहसिंहतः ।
तद्धेतोर्भ्रातृजादीनां स्मरणार्थं विलिख्यते ॥ २ ॥

कविकुञ्जरो भारविः प्राणदेवाऽपरनामधेयः किरातार्जुनीयं काव्यं प्रणिनीषुस्तल्लक्षणं वस्तुनिर्देशं प्रणयन्नाह"। अत्र टीकायां सप्तदशसर्गाः।

### गदसिंहग्रन्थः—

१–अनेकार्थध्वनिमञ्जरी (=नानार्थध्वनिमञ्जरी ) ( मुद्रिता ) ।

## ८–काशीनाथकृता-किरातार्जुनीयटीका ।

( १६१० ई० )

( कीलहार्न ६५, पिटर्सन् ५ वा० ३३० पृष्ठे )

विदुषोऽस्य परिचयविशेषं नोपलभामहे । किन्त्वनेन १२००–१२५० ई० वत्सरेऽनुभूतिस्वरूपाचार्येण निर्मितस्य सारस्वतव्याकरणस्य व्याख्यानं सारस्वतभाष्याख्यं निर्मितम् ।

बेल्वेल्क(१)रमहाभागः काशीनाथपण्डितजीवनकालं १६१० ई० वत्सरे मनुते ।

इयं टीका त्रयोदशसर्गान्तोपलभ्यते ।

काशीनाथग्रन्थः—

सारस्वतभाष्यम् । ( कीलहार्न ७०; राधाकृ० १० )

९-भरतमल्लीककृता सुबोधाख्या व्याख्या ।

( १६३९ ई० वत्सरतः पूर्वा )

( इ० आ० कै० वा० ७ नं० ३७९६; मित्र ९ वा० ३१८३ )

भरतमल्लीकस्य मल्ली, मल्लिः, मल्लीक, भरतसेनः, यशश्चन्द्ररायः, इति नामधेयानि समधिगम्यन्ते । भरतमल्लीकजनकस्य गौराङ्गमल्लीकस्य त्रयः पुत्राः समभवन् । प्रथमो हरिमल्लीकः, द्वितीयः प्रसादमल्लीकः, तृतीयो भरतमल्लीक इति । यथा वैद्यकुलतत्त्वे—

"गौराङ्गमल्लीकस्यासी अभवंस्तनुजास्त्रयः ।
अग्रजो हरिमल्लीको दाता भोक्ता महायशाः ॥ १ ॥

परं प्रसादमल्लीकः सदाचाररतः सदा ।
परो भरतमल्लीकः द्विजवैद्याङ्घ्रिसेवकः ॥ २ ॥

गौराङ्गमल्लीकस्य पिता वैद्यमालञ्चीयवंशोत्पन्नहरिहरखांपुत्रो विनायकसेनः । अम्बष्ठजातिसमुत्पन्नो वङ्गवासी वैद्यकशास्त्रप्रवीणो भरतसेनः कल्याणमल्लमहाराजसमाश्रितो बभूव ।

विद्वद्वरः कोलेब्रुक [ Colebrooke ] महाभागोऽमरकोषभूमिकायाः ८ पृष्ठेऽष्टादशशताब्दीमध्यभागे वर्त्तमानं भरतसेनं प्रमाणीकुरुते । वयं तु भरतसेनं षोडशशताब्दीमध्ये वर्त्तमानं निश्चिनुमः ।

---

( १ ) सिस्टम आफ् संस्कृतग्रामर पृष्ठे १०० ।

यतो वोपदेवकृतकविकल्पद्रुमटीकायां (जीवानन्दसंपादितायाम्) दुर्गादासेन "क्ति श वासगत्योराधारे क्तिरित्यमरटीकायां भरतः" (पृ० १३, पं० ५.) इति "घञन्तोऽपि क्वचिन्नपुंसकमिति धातुप्रदीपे इत्यमरकीटायां भरतः" ( पृ० ४७, पं० १६. ) इति च भरतसेनसमुल्लेखो विहितः । दुर्गादासश्च कविकल्पद्रुमटीकां १६३९ ई० वत्सरे निर्मितवानिति कविकल्पद्रुमटीकापुष्पिकातोऽवसीयते । यथा—

"शाके सोमरसेषुभूमिगणिते श्रीसार्वभौमात्मजो
दुर्गादास इमां चकार विशदां टीकां स्वबोधादपि" इति ।

एवं भरतसेनः षोडशशताब्द्या अन्तिमभागमारभ्य सप्तदशशताब्दीप्रारम्भभागपर्यन्तमविद्यतेति ।

अत्रायं महान् संशयः समुपस्थापितो नित्यस्व(१)रूपब्रह्मचारिणा यद्वैद्यकुलतत्त्वे उपसर्गवृत्तौ च भरतमल्लीकसमयो महता विभिन्नरूपेण निर्दिष्टो वर्त्तत इति ।

यथा—वैद्यकुलतत्त्वे भरतमल्लीकस्य स्वहस्तलिखितपुस्तकसमाप्तिशकाब्दाः १५९७ इति दृश्यते । उपसर्गवृत्तौ तु "शाकेऽष्टशरसप्तेन्दु—(१७५८) मिते चाषाढके समाप्ता चोपसर्गाणां वृत्तिः प्रतिपदीन्दुभे" इति भरतसेनस्य स्वलेखः प्राप्यते ।

अत्रेदं संशयनिराकरणम्—उपसर्गवृत्तौ या समयप्रमितिरुपलभ्यते तां लिपिकालप्रमितिं, लेखकभ्रान्तिं वा मत्वायं संशय अपाक्रियताम् । किरातव्याख्यायां (मित्र० ९ वा० ३१८३) भरतसेनयशश्चन्द्रराय इति नामधेयं समधिगम्यते ।

## भरतमल्लीकग्रन्थाः—

१—उपसर्गवृत्तिः (बूलर३. २. ) ।

२—एकवर्णार्थसंग्रहः ।

---

( १ ) कलिकातातः १३२६ वंगाब्दे प्रकाशितायां नैषधकाव्यभूमिकायाम् ।

३—कारकोल्लासः ( मुद्रितः )।

४--गणपाठः।

५—घटकर्परटीका (मित्र० ९ नं० ३१७२ )।

६--द्रुतबोधव्याकरणम्।

७—द्रुतबोधिनी-द्रुतबोधव्याकरणटीका।

८--द्विरूपध्वनिसंग्रहः।

९--मुग्धबोधिनी-अमरकोषटीका ( मित्र० ५२९, ९२६ )।

१०-- ,, — भट्टिकाव्यटीका (डि० म० कै० सं ११६१७)।

११--वैद्यकुलतत्त्वम् ( मित्र० ६११ संख्या ) ( अत्र वाङ्गवैद्याना-नामितिहासः )।

१२--सुखलेखनम् ( मित्र० ५६८ )।

१३—सुबोधा—कुमारसम्भवटीका ( इ० आ० कै० नं० ३७६६; हृषीकेश वा० ५ नं० २९ )।

१४—,,—नलोदयटीका ( इ० आ० कै० वा० ७ नं० ३७८२ )

१५—,,—नैषधकाव्यटीका ( ,, नं० ३८३१; हृषीकेश वा० ५ नं०६४ ) (मुद्रिता कलिकातानगरे)।

१६—,,--मेघदूतटीका ( इ० आ० कै० वा० ७ नं० ३७७६ )।

१७—,,--रघुवंशटीका (इ० आ० कै० वा० ७ नं० ३७४३ )।

१८--,,--शिशुपालवधटीका ( इ० आ० कै० वा० नं० ३८१३ )।

## १०—बङ्किमदासकृता-वैषम्योद्धरणीटीका।

( १६७२ ई० वत्सरपूर्वकालीना )

( मित्र० १६४४ सं० )

विदुषोऽस्य कविराज इति उपाधिः समधिगम्यते। एतेनासौ व-ङ्गदेशप्रसिद्धवैद्यजातीय इत्यनुमातुं शक्यते। एतस्याष्टीकायाः पुस्तके

लिपिकालमितिः १५९४ शाक ( १६७२ ई० ) वत्सरीया प्राप्यते । अतोऽयं विद्वान् लिपिसम्वत्सरतः पूर्वकालीन इति सिद्धम् ।

## ११—धर्मविजयगणिकृता प्रदीपिका टीका ।

( १७०६ ई० पूर्वकालीना )

(पिटर्सन्-५, ३३१ (प्रथमसर्गः); मित्र०२८०६ सं०; बूलर. २, ७४)

जैनोऽयं तपागण (तपागच्छीय) प्रविष्ट इति विज्ञायते । सं० १७६६ समये व्याख्ययेयं लेखकेन लिखिता । धर्मविजयगणिनो गुरुपरम्परा चेत्थं लभ्यते ।

१—विजयदानसूरिः । २—राजमल्लः । ३—वाचकमुनिविजयः । ४—देवविजयवाचकः । ५—धर्मविजयगणी इति । षोडशसर्गान्तेयं टीका ।

## १२—मनोहरशर्मणा विरचिता-सुभाषिणी टीका(१) ।

( १७९६ ई० वत्सरतः पूर्वा )

( मित्र० २२२३ सं० )

व्याख्येयं माणिक्यमल्लक्षितिपालसंतुष्ट्यै विनिर्मिता । अथ कोऽयं माणिक्यमल्लभूपालः इति ज्ञातुं न शक्यते । अनेनैव विदुषा विरचिता श्रुतबोधटीका लेखकेनावन्तिपुरे लिखिता १७९६ ई० वत्सरे ।

---

(१) इदानीन्तने समये च गुरुनाथभट्टाचार्येण हरिदासभट्टाचार्येण च संपूर्णेऽस्मिन्काव्येऽन्वयादि व्याख्या विरचिता । गिद्धौरमहाराजाश्रितमतिनाथमहोदयेन १–९; ११-१४ सर्गेषु अन्वयमुखी हिन्दीभाषाटीका च प्रणीय वेङ्कटेश्वरयन्त्रालयात् १९७३ वैक्रमाब्दे प्रकाशिता । १–३ सर्गेषु भावार्थदीपिनी कनकलालठक्कुरमहोदयेन विरचय्य १९७८ विक्रमाब्दे, तथा गङ्गाधरमहाभागेन सुधाख्या १९८६ वि० वर्षे, काशीस्थचौखम्बासंस्कृतग्रन्थमालायां प्राकाश्यं नीता । तेष्वेव च सर्गेषु (१-३) सुबोधिनी पं० गौरीनाथपाठकमहाभागेन १९८३ वि० वर्षे, एवमम्बिकाप्रसादेन, जीवा-

## ख—अविदितसमयाष्टीकाः ।

### ( १—विदितकर्तृनामिकाः )

### १३—अल्लाडनरहरिकृता—अल्लाडलहरीटीका ।

कैम्ब्रिजपुस्तकालयसूचीपत्रपृष्ठे ९ मिते "अल्लाडलहरी"ति नाम प्राप्यते । आवाजीसूचीपत्रे चेयं टीका १-१० सर्गान्ता; एकादशसर्गे च खण्डितास्ते । पूना. ९ । कीलहार्न. ४६६ ।

### १४—एकानाथकृता—प्रसन्नसाहित्यचन्द्रिका ।

(बूलर. २.७४; गुजरात.४; भण्डारकर. ४; पूना. ९; बम्बई १३६; रामकृष्ण ३३२; पिटर्सन् ६. ३२६ )

अयं व्याख्याकारो दाक्षिणात्यः । अनेनैव दुर्गासप्तसतीटीका 'अन्वयार्थप्रकाशिका' निर्मिता ( मित्र२५५५सं० ) ।

### १५—कृष्णकविकृता—किरातार्जुनीयटीका ।

( डि० म० कै० ११४८० संख्या २० भागे )

अत्र व्याख्यायामष्टमशताब्दीपूर्वकाले वर्त्तमानस्य वेणीसंहारकर्त्तुर्भट्टनारायणस्य नाम निर्दिष्टम् ।

### १६—चित्रभानुनिर्मिता—शब्दार्थदीपिका ।

( मुद्रिता )

त्रैसर्गिकव्याख्यैषा १९१८ ईस्वीवत्सरेऽनन्तशयनग्रन्थावलौ म० म० त० गणपतिशास्त्रिणा सम्पाद्य प्रकाशिता । अयं चित्रभानुः कदा बभूवेति न नियतम् । इयं व्याख्या दक्षिणे भागे त्रैसर्गिकीति नाम्ना

---

राममहाभागेन च निर्माय टीका विख्यापिता । इत्थं परीक्षोपयोगिन्योऽन्या अपि व्याख्या अनुसंधेयाः ।

सुप्रसिद्धतमा । अत एव विज्ञायते दाक्षिणात्योऽयं चित्रभानुरिति ।

अत्र टीकायां ये ग्रन्थाः ग्रन्थकाराश्च प्रमाणत्वेनोट्टङ्किताः स्तेऽपि समयपर्यालोचने सहयोगं न ददति । यतस्तेऽपि प्राचीनतमाः । यथा माघकविः, भट्टिकाव्यम्, बार्हस्पत्यनीतिः, औशनसी नीतिः, अमरकोषः, पाणिनीयसूत्रम्, नरकवधं चेति ।

टीकाकारोऽयं टीकामिमां पञ्चधा विभक्तवान् । तेषु१-३सर्गपर्यन्ता मुखसन्धिवर्णनात्मिका त्रिसर्गी; ४-५सर्गान्ता प्रतिमुखसन्धिमयी द्विसर्गी; ६-१०सर्गान्ता गर्भसन्धिमयी पञ्चसर्गी; ११-१६सर्गावधिः विमर्शसन्धिस्वरूपा-षट्सर्गी, एवं च १७-१८सर्गान्ता निर्वहणसन्धियुक्ता द्विसर्गीति नामधेयानि नियतवान् । इयं व्याख्याऽनन्तशयनराजकीयपुस्तकालयसूचीपत्रपृष्ठे९६मित एकादशसर्गान्ता प्राप्यते । टीकासौ संपूर्णतां कथं न नीतेति पर्यनुयोगप्रतिवचनमेतेन स्वयमेव समुल्लिखितम् । यथा—

प्रवृत्तिशक्त्योरवसादतोऽन्तरा भवेदनिर्व्यूढमिदं तु यद्यपि ।
तथापि शब्दार्थनबाध्वबोधकं करोति कामं सुधियां निबन्धनम् ॥ इति ।

यादृशं भारवेः किरातार्जुनीयं प्रौढमर्थगम्भीरं च काव्यम्; तादृशी तस्य गम्भीरा समुत्कृष्टा व्याख्यास्ति न वेति लोकानां संदेहोऽनेन व्याख्यानेन निरस्यते । मुद्रणं नीतेन सर्गत्रयव्याख्यानेनेदं प्रतीयते यन्नानया सदृशी काचन प्रौढार्थगम्भीराऽन्या व्याख्या समुपलब्धेति । इयं टीका मल्लिनाथीयटीकावन्न सरला, किन्तु नव्यन्यायवद् व्याकरणपरिष्कारवज्जटिलपङ्क्तितिभिरापूर्णा । अत्र प्रथमं पदानां सतर्कं सपूर्वपक्षं चार्थविवरणम् । ततश्च सम्बद्धार्थतात्पर्यार्थयोर्निर्वचनम् । व्याकरणसूत्रैः पदे पदे पदसिद्धिस्तथालङ्कारप्रभृतिसाहित्यिकविषयपर्यालोचनं च प्रौढरीत्या समनस्कं संदृब्धम् ।

यथा स्थालीपुलाकन्यायेनोदाहरणम्—

(क)—"जलाशयकर्मिकां पादकरणप्राप्तिरूपामवतरणक्रियां वदता गाहतिना नयकर्मिका मनःकरणप्राप्तिरूपावगमनक्रिया लक्ष्यते, यथा पादविगाहनविषयो जलाशयश्चक्षुर्विषयो घटादिरिव न स्फुटं गृह्यते न च कार्त्स्न्येन, तथैव मनोविमर्शविषयो नय इति नयस्य गहनत्वं द्योतयितुम्" (२ सर्गे ३ श्लोके)।

(ख)—"प्रत्यागतं त्वास्मि कृतार्थमेव स्तनोपपीडं परिरब्धुकामा" इत्यत्र ( ३ सर्गे ५४ श्लोके )

"प्रवासकालोचितं तत्परिरम्भं कृतवत्या एतद्वचनम्—

तेन प्रवासपरिरम्भेणागमनपरिरम्भस्य साम्यं गम्यते। प्रवासागमनालिङ्गनयोर्गाढानुरागगमकत्वादन्योन्यसाम्यमुचितम्। एवमुचितज्ञेन महाकविना वीरपत्न्यां याज्ञसेन्यामनुस्यूतो वीररसः प्रेयसस्तस्यार्जुनस्य वियोगसमये शृङ्गाररूपेण परिणतिं नीतः" इत्यादि।

## अथ टीकाप्रारम्भिकपद्यानि।

शिवं महः शार्ङ्गिशिवात्मविग्रहं समस्तमङ्गल्यमधीश्वरं परम्।
जगत्क्रियातत्फलजन्यकारणं प्रणौमि भक्त्या प्रणमामि चान्वहम् ॥१॥
परां गिरं तां च गणेश्वरं च तं जगद्गुरुं तं च पराशरात्मजम्।
प्रणम्य तद्भारविकाव्यवारिधेर्विचेतुमाकूतिमणीन् यतामहे ॥ २ ॥
स्फुरन्मनाग् भारविभारतीगतं मनोरमं वस्तु गभीरमद्भुतम्।
अपुष्कलो लक्षणलक्ष्यगोचरः श्रमश्च वाचालतरं करोति माम्॥ ३ ॥
गभीरता भारविभारतीषु या प्रसन्नता चानुपदं प्रतीयते।
इयत्तया तामवगन्तुमुद्यतो ध्रुवं सुधासिन्धुतलं दिदृक्षते ॥ ४ ॥
प्रवृत्तिशक्त्योरवसादतोऽन्तरा भवेदनिर्व्यूढमिदं तु यद्यपि।
तथापि शब्दार्थनवाध्ववोधकं करोति कामं सुधियां निबन्धनम् ॥ ५ ॥
नवे नवे कर्तरि सावधीरणाः समत्सराः केऽपि विदग्धमानिनः।
निबन्धनेऽस्मिन् जनयन्त्युपेक्षणं, त्यजन्ति ते रत्नवरं करार्पितम् ॥६॥

रसान्तरज्ञाः पदवाक्यचातुरीविवेचका मानविदो विपश्चितः ।
पराकृतेर्ष्याः परितः परीक्षकाः पृथक् परीक्षां कृतिनोऽत्र कुर्वताम् ॥७॥
परीक्षितेऽत्रावहितैः परीक्षकैः क्रमेण दोषाश्च गुणाश्च भान्ति चेत् ।
विविच्य वागर्थगतेर्विभावनाद्भवेद् ध्रुवं नः सफलः परिश्रमः॥८॥इति ।

## १७--दामोदरमिश्रकृता-गौरवदीपिनी टीका ।

( मित्र २९३६ सं० )

व्याख्यातायं कर्णपुराधीशहेमन्तसिंहस्य राजपण्डित आसीदित्येतस्या व्याख्यायास्तालिकातः प्रतीयते । यथा—"इति श्रीकर्णपुरमहीमण्डलाखण्डलमहाराजश्रीहेमन्तसिंहद्वारपण्डितमगधभूदेवमिश्रश्रीदामोदरकृतायां भारविकाव्यगौरवदीपिन्यां टीकायां नवमः सर्गः" । कर्णपुरमिदं भागलपुरस्थितचम्पावतीनगर्यां कर्णगढनाम्ना स्वनाम्ना वा गङ्गदेशापरपर्यायं विश्व(१)विदितम् । नवसर्गान्तेयं टीका ।

## १८--देवराजभट्टनिर्मिता-सुखबोधिनी व्याख्या ।

( ट्री० कै० म० वा० २ पार्ट० १ ( c ) नं० १८५४ ( d ); तथा वा० ४ पार्ट १ नं० २९१२; अनन्तशयनसूचीपत्र ९७ पृष्ठे, १-९ सर्गाः। १५ सर्गश्च )

• कृष्णद्वैपायनभट्टोऽस्य जनकः । देवराजभट्टेन या शिशुपालवधटीका निर्मिता तत्र हरिदासः, वल्लभदेवः, रङ्गदेव इति नामानि प्राप्यन्ते । यथा—

हरिदासात्तु तात्पर्यं वल्लभात्पदनिर्णयम् ।
ज्ञात्वा श्रीरङ्गदेवाद्यात् यत्सारं तच्च लिख्यते ॥

---

(१) नन्दलालदेकृतजिओग्राफीकल् डिक्सनेरी ।

देवराजस्य किरातटीकायाः प्रारम्भः—

"यस्य लक्ष्मीभुजाश्लेषः कण्ठे कङ्कणराजयः ।
मणिमाला इवाभान्ति स वः पायाज्जनार्दनः ॥ १ ॥
प्रकाशवर्षप्रभृतिप्रणीता व्याख्या न पूर्णा इति भारवीये ।
काव्ये प्रभूतां विदधाति टीकां श्रीदेवराजो विदुषां निदेशात् ॥ २ ॥
अनूद्य सर्वं पदसिद्धिमुक्त्वा पदान्वयेन प्रकटय्य वाक्यम् ।
प्रदर्श्य भावं सुखबोधिनीं तां करोत्ययं बालविबोधनार्थम्" इति ॥३॥

टीकेयं कस्यापि विदुषो निदेशाद्विरचितेति प्रागुक्तश्लोकेभ्यो विज्ञायते अत्रान्यासां टीकानां सारः, पदसिद्धिः, पदान्वयः, वाक्यार्थः, भावार्थश्च निरूपितः । १-सर्गतः ३ सर्गान्ता व्याख्या कुप्पुस्वामिकृत-मद्राससुचीपत्रे २ वाल्यूम १ पार्ट (c) १८५४ (d.) संख्यायां विवृता । अत्र व्याख्यायां "वसुमुनिविरतिश्चेन्मालिनी नौ मयौ यः" इदं मालिनीवृत्तलक्षणं कस्माद् ग्रन्थादुद्धृतमिति न जानीमः । मन्ये सति तद्ग्रन्थज्ञाने समयपर्यालोचनसाहाय्यं सम्पन्नं स्यात् ।

## देवराजग्रन्थः--

१-सारसंग्रहणम् शिशुपालवधव्याख्यानम् ।

(डि० म० कै० वा० २० नं० ११८१२; ट्री० कै० म० वा० ३ पार्ट १ (c) नं० २६८३ )

## १९—नरहरिकृता-किरातार्जुनीयटीका ।

अस्या निर्देशो म. म. दुर्गाप्रसादमहाभागैर्निर्णयसागरयन्त्रालय-प्रकाशितकिरातार्जुनीयभूमिकायां विहितः ।

## २०—नृसिंहकृता-किरातार्जुनीयटीका ।

( का० कै ६७ पृष्ठम् )

## २१—भगीरथकृता-तत्त्वदीपिका सर्वमङ्गला वा ।

(इ० आ० कै० वा० ७ नं० ३७२९ तथा ३७६६)

अस्य पिता प्रबोधमिश्रः, माता चामला, उत्साहकरदाशरथौ चास्य पितृव्यौ, पुत्रश्च वाणीविलासगोपालनन्दः कुमारसंभवटीकाकारः । जगच्चन्द्रचन्द्रिकाया रघुवंशटीकाया निर्माता भगीरथस्तु हर्षदेवपुत्रतयास्मादन्यः ।

## २२—मङ्गलकविकृता किरातार्जुनीयव्याख्या ।

( ट्री० कै० म० ३ पार्ट १ ( b. ) नं० २४२५;
तत्रैव वा० ३ पार्ट १ ( c ) नं० २६८४;
डि० म० कै० वा २० नं० ११४६४ )

विवरणं नोपलभ्यते । टीकापुस्तकं भीमसेनपुत्रः सुन्दरदासः १८०१ वि० सं पौ० कृ० १२ (=१७४४ ई०) वत्सरे लिलेख (डि० म० कै० वा० २० नं० ११४६४) ।

## २३— मल्लकविकृता-बालबोधिनीटीका ।

( पिटर्सन् ४ वा० २२ पृ० तथा २५ पृ० )

टीकेयं मल्लिनाथीयघण्टापथसमाश्रयेण विनिर्मिता । टीकाकारपिता शुकः । जयरामो हि पितामहः । एष च पुष्करवंश्यः ।

## २४–माधवकृता व्याख्या ।

टीकेयं गौरीनाथपाठकमहोदयै“र्महाकविर्भारविर्द्वामोदर” नामके निबन्धे २६ पृष्ठे निर्दिष्टा । अयं निबन्धः काशीस्थशारदाभवनात् १९८८ वैक्रमाब्दे प्रकाशितः ।

## २५–रविकीर्तिकृता व्याख्या ।

कोऽयं रविकीर्त्तिरिति न विदितम् । इयं टीका पं० गौरीनाथपाठ-

कमहोदयैः "महाकविर्भारविर्दामोदर" नामके निबन्धे २६ पृष्ठे निर्दिष्टा।

२६-राजकुण्ठ (कुण्ठ) कृता-किरातार्जुनीयकाव्यदुर्घटा

( बूलर रिपोर्ट ८ )

माघकाव्यदुर्घटाप्यनेन कृता (युनिवर्सिटी २४६७।१ स० १७ सर्गः)।

२७-रामचन्द्रकृता-मनोरमा व्याख्या।

( मित्र० ३३६९ संख्यायाम् ) १ सर्गतः ५ सर्गान्ता।

२८-रामचन्द्रकृता-सुजनतोषकरी टीका।

"सुजनबोधकरी मनोहरा च" इति नामनी म० म० हरप्रसादशास्त्रिणां सूचीपत्रे १०मभागे ३३६९ संख्यायां प्राप्येते, तथा तेषामेव नवीनसूचीपत्रे १ म भागे २६१ संख्यायामपि।

२९-लोकानन्दकृता-किरातार्जुनीयटीका।

( डेक्कनकालेज १३७ पृ० )

३०-विनयराम (सुन्दर) कृता-प्रदीपिका व्याख्या।

अलवर ९०० संख्यायाम् ( ३-१३ सर्गान्ता ); तथा बूलर २, ७६; B. P. २७८, ४४८ )। अयं जैनः।

३१-हरिकण्ठकृता-सारावलीव्याख्या।

(इ० आ० कै० नं० ३७८९ तथा ३८०७७; एसियाटिकसोसाइटी ४७)।

( २—विदितटीकानामिकाः )

३२-कथंभूती टीका।

( अलवरसूचीपत्रे ९०१; खण्डिता )

रघुवंशेऽपि कथंभूती टीका प्राप्यते । कुमारसंभवीयकथंभूती-टीकाकर्ता तु विन्ध्येश्वरीप्रसादः ।

### ३३-बालबोधिनी व्याख्या ।

( B. d. ३७६ )

### ३४-शब्दार्थदीपिका रसबोधिनी वा ।

( आफ्रेट सूची ५९३८ नं० )

### ३५-स्थूलतात्पर्यार्थटीका ।

( इ० आ० कै० ३८०८-९ )

इयं स्थूलतात्पर्यार्थटीका नलोदये, कुमारसम्भवे, रघुवंशे, राघव-पाण्डवीयेऽपि प्राप्यते । मन्ये सर्वाष्टीका एकेनैव विदुषा विरचिताः ।

( ३-अविदितटीकातत्कर्तृनामिकाः )

### ३६-अज्ञातनाम्नी टीका ।

( बीकानेर २३६; राइस् २२८ )

बीकानेरसूच्यां टीकाप्रारम्भः—

यद्वतानाभिभूयो विमलतरमतिर्मारुदेवीः समेषा—

माराध्यः पौरुषाणां महिमगुणनिधिः केवलज्ञानशाली ।

यद्वातं कनवकुर्जगतियतिवरा विश्वविश्वप्रदीपा(?)

सायं पापादपायाद्धिनयनमुदामामादिदेवासपात्रम् (?)

अशुद्धिबहुलमिदं पद्यम ।

### ३७-अज्ञातनाम्नी टीका ।

( शेषगिरिशास्त्री २; १०६ )

### ३८-अज्ञातनाम्नी टीका ।

( डि० कै० म० वा० ६ नं० ३१८७ )

इयं टीका १-३ सर्गान्ता प्राप्यते। यद्यपि टीकायामस्यां घण्टापथनाम कुत्रचित् प्राप्यते, तथापि लेखकप्रमादरूपमेव तत्। टीकाप्रारम्भः—

श्रीवत्सवत्तसं श्रीशं······सारथि।
व्याख्या किरातकाव्यस्य यथावत्क्रियते मया ॥ १ ॥
शब्दार्थविषया दोषा भवेयुर्मतिविभ्रमात्।
तान्सन्तः क्षन्तुमर्हन्ति कस्य नास्ति हि विभ्रमः ॥ २ ॥
पूर्वमेव कृता चास्य व्याख्या या स्ला (?) पसूनुना।
ततोऽप्यर्थं समादाय क्रियतेऽत्रार्थनिश्चयः ॥ ३ ॥

चरमभागे—"सव्रीडमन्दैरिव निष्क्रियत्वात्" अस्य श्लोकस्य व्याख्या प्राप्यते।

एवमष्टात्रिंशन्मिता एताष्टीकाः किरातार्जुनीयकाव्यस्य समुपलभ्यमानेभ्यो ग्रन्थेभ्यः संगृहीताः। एतासु द्वादशटीका विदितसमयाः षड्विंशतिमिताश्चाविदितसमयाः। अविदितसमयास्वपि विदितकर्तृनामिका एकोनविंशतिः, विदितटीकानामिकाश्चतस्रः, अविदितटीकातत्कर्तृनामिकाश्च तिस्रः, सन्तीति सर्वासामविदितसमयानां विभागशः संकलनम्।

यद्यप्यत्र विद्वद्वरैर्गवेष्यमाणेषु नवग्रन्थरत्नेषु चरमसिद्धान्तोपस्थापनं दुःशकम्। तथापि यथामति भारवेस्तदीयकिरातार्जुनीयकाव्यस्य तट्टीकाकर्तॄणां च समालोचनं सम्पादितमित्यवदातम्।



## संक्षिप्तसंकेतविवरणम् ।

अनन्तशयनसूचीपत्रम्—अनन्तशयनस्थराजकीयसंस्कृतपुस्तकशालास्थितपुस्तकनामावली, अनन्तविलासस्थपुस्तकनामावली च क्रैस्तवे १८९९ वत्सरे मुम्बय्यां निर्णयसागरयन्त्रालये मुद्रयित्वा प्राकाश्यं नीते ।

अलवर—कैटोलाग् आफ् दी संस्कृतमनस्क्रिप्ट्स् इन् दी लाइब्रेरी आँ हिज् हाइनेस् दी महाराजा आफ् अलवर, बाई पेटर पिटर्सन् , बम्बई १८९२ ।

आक्सफोर्डसूची—कैटलोगस् कोडिकम् संस्कृतिकोरम् बिब्लोथिकी बोडलियनी, कान्फेसिट् थिओदोर आफ्रेक्ट् , आक्सफोर्ड १८६४ ई० ।

आपेर्ट—ए लिस्ट् आफ् संस्कृतमनस्क्रिप्ट्स् इन् प्राइवेट् लाइब्रेरीज् आफ् सदर्न इन्डिया, बाई गुस्ताव आपेर्ट, मद्रास ।

आबाजी—रिपोर्ट फार सर्च आफ संस्कृतमनस्क्रिप्ट्स् इन् दी बम्बई प्रेसीडेन्सी डुरिङ्ग दी ईयरस् १८९१–९५, आबाजी विष्णु कथवाटे, बम्बई १९०१ ।

इ० आ०—इन्डियन् आण्टिक्वेरी ।

इ० आ० कै०—कैटोलाग् आफ दी संस्कृतमनस्क्रिप्ट्स् इन दी लाइब्रेरी आफ दी इन्डिया आफिस, एडिटेड् बाई जूलिस् एग्लिङ्ग, लण्डन ।

इ० हि० क्वा०—इन्डियन् हिस्टोरीकल् क्वार्टर्ली (कलकत्ता), नरेन्द्रनाथ ला ।

एपि० इन्डि०—एपिग्राफीया इन्डिका ।

एपि० कर्णा०—एपिग्राफीया कर्णाटिका ।

ए० फा० अ० वि०—ए फार्गटन् अम्पायर (विजयनगर), बाई राबर्ट सिविल. लण्डन ।

एसियाटिक सोसाइटी—कैटोलाग् आफ् प्रिन्टेड् बुक्स् अन्ड मनस्क्रिप्ट्स् इन संस्कृत बीलाङ्गिङ्ग टु दी ओरियण्टल् लाइब्रेरी आफ् दी एसियाटिक सोसाइटी आफ बङ्गाल् ,कम्पाइल्ड बाई पण्डित कुञ्जविहारीन्यायभूषण अन्डर दी सुपर्विजन् आफ महामहोपाध्याय हरप्रसाद शास्त्री, कलकत्ता १८९९–१९०१ ।

ए० सो० व०—एसियाटिक सोसाइटी आफ बङ्गाल (कलकत्ता) ।

का० कै०—काश्मीर कैटोलाग् । ( कैटोलाग् आफ् दी संस्कृत मनस्क्रिप्ट्स् इन् दी रघुनाथ टैम्पिल लाइब्रेरी आफ हिज् हाइनेस् दी महाराजा आफ् जम्बू एन्ड काश्मीर, प्रिपेअर्ड बाई एम० ए० स्टाइन्, बम्बई १८९४ ) ।

— —

कीलहार्न—रिपोर्ट आन दी सर्च फार संस्कृतमनस्क्रिप्ट्स्, इन दी बम्बई प्रेसीडेन्सी डुरिङ्ग दी ईयर १८८०-८१, बाई एफ० कीलहार्न, बम्बई १८८१ ।

कुर्ग इन्स्क्रि०—कुर्ग इन्स्क्रिप्सन्स् मद्रास ।

कैम्ब्रिजपुस्तकालयसूची—ए कैटोलाग् आफ् संस्कृतमनस्क्रिप्ट्स् इन् दी लाइब्रेरी आफ् ट्रिनीटी कालेज कैम्ब्रिज्, थन्डोर आफ्रेक्ट्, कैम्ब्रिज् १८६९ ।

गुजरात—रिपोर्ट आन् दी रिजल्ट्स् आफ दी सर्च फार संस्कृतमनस्क्रिप्ट्स् इन गुजरात, डुरिङ्ग दी ईयर १८७१—७२, बाई जी० बूलर, सूरत १८७२ ई० ।

जेड्० डी० एम० जी०—साइत्स्क्रिफ्त् देअर दायसन् मोर्गेन् लेन्देसन् गेसल् सेफ्त् ।

टी० कै० म०—ए ट्रीनीयल् कैटोलाग् आफ मनस्क्रिप्ट्स् फार दी गवर्नमैंण्ट ओरियण्टल् मनस्क्रिप्ट्स् लाइब्रेरी मद्रास, बाई कुप्पुस्वामी शास्त्री एम० ए० ।

डि० कै० तं०—ए डिस्क्रिप्टिव् कैटोलाग् आफ दी संस्कृतमनस्क्रिप्ट्स् इन् दी तंजौरमहाराजा शरभोजीस् सरस्वतीमहल लाइब्रेरी तंजौर ।

डि० म० कै०—ए डिस्क्रिप्टिव् कैटोलाग् आफ दी संस्कृत मनस्क्रिप्ट्स् इन दी गवर्नमैण्ट ओरियण्टल् मनस्क्रिप्ट्स् लाइब्रेरी, मद्रास, बाई कुप्पुस्वामी शास्त्री वा० २० ।

डेक्कनकालेज—कैटोलाग् आफ् दी कलेक्सन् मनस्क्रिप्ट्स् डिपाजिटेड् डेक्कनकालेज पूना, सन् १८८८ बम्बई, बाई आर० जो० भण्डारकर ।

नि० प्रे०—निर्णयसागरप्रेस बम्बई ।

पिटर्सन्—ए डिटेल्ड रिपोर्ट आफ् आपरेशन् इन सर्च आफ् संस्कृत मनस्क्रिप्ट्स् इन दी बम्बई सर्किल, रिपोर्ट्स् १—६ । बम्बई ।

पूना—लिस्ट् आफ दी संस्कृत मनस्क्रिप्ट्स् पर्चेज्ड फार गवर्नमैण्ट डुरिङ्ग दी ईयरस् १८७७-७८ अन्ड १८६९-७८, अण्ड ए लिस्ट् आफ् दी मनस्क्रिप्ट्स् पर्चेज्ड फ्राम् मई टु नवम्बर १८८१, बाई एफ० कीलहार्न, पूना १८८१ ।

प्रा० ले०—प्राचीनलेखमाला काव्यमालायां प्रकाशिता ।

बम्बई—रिपोर्ट आन दी सर्च फार संस्कृतमनस्क्रिप्ट्स् इन् दी बम्बई प्रेसी-

डेन्सी डुरिङ्ग दी ईयर १८८२–८३, बाई आर० जी० भण्डारकर, बम्बई १८८४। कोटेड् बाई नम्बरस् ।

बीकानेर—ए कैटोलाग् आफ् संस्कृतमनस्क्रिप्ट्स् इन् दी लाइब्रेरी आफ हिज् हाइनेस दी महाराजा आफ् बीकानेर, कम्पाइल्ड बाई राजेन्द्रलालमित्र कलकत्ता १८८०।

बूलर, तथा बम्बई प्रकाशित बूलर सूचीपत्र—ए कैटोलाग् आफ् संस्कृतमनस्क्रिप्ट्स् कन्टिन्यूड् इन दी प्राइवेट् लाइब्रेरीज् आफ गुजरात, काठियावाड, कच्छ, सिन्ध, अन्ड खानदेश कम्पाइल्ड अन्डर दी सुपरिन्टेन्डेन्स आफ जी० बूलर, फोर फेसिक्युलस, बम्बई १८७१–७३ ।

बूलररिपोर्ट—डिटेल्ड रिपोर्ट आफ् ए टूर इन् सर्च आफ् संस्कृत मनस्क्रिप्ट्स्, मेड इन् काश्मीर, राजपुताना, अन्ड सेन्ट्रल इन्डिया, बाई जी० बूलर, बम्बई १८७७।

भण्डारकर—लिस्ट् आफ संस्कृत मनस्क्रिप्ट्स् इन् प्राइवेट् लाइब्रेरीज् इन् दी बम्बई प्रेसीडेन्सी कम्पाइल्ड अन्डर दी सुपरिन्टेन्डेस् आफ आर० जी० भण्डारकर, पार्ट १ बम्बई १८९३ ।

माइसोर इन्स्क्रि०—माइसोर इन्स्क्रिप्सन्स् ।

मित्र०-नोटिसेज् आफ् संस्कृत मनस्क्रिप्ट्स्, बाई राजेन्द्रलालमित्र, वाल्यूम, तथा संख्या । कलकत्ता १८७१–१७९० ई० ।

मैसूरकैटोलाग्=ए सप्लिमेन्ट्री कैटोलाग् आफ् संस्कृतवर्कस् इन दी सरस्वतीभण्डारं लाइब्रेरी आफ हिज् हाइनेस दी महाराजा आफ माइसोर, सिग्नेड बाई कीलहार्न,

युनिवर्सिटी—ए सिलेक्सन् आफ् संस्कृत मनस्क्रिप्ट्स् इन् दी युनिवर्सिटी लाइब्रेरी कैम्ब्रिज् ।

राइस्—कैटोलाग् आफ् संस्कृत मनस्क्रिप्ट्स् इन् माइसोर अन्ड कुर्ग, बाई लेविस् राइस् बङ्गलोर १८८४ ।

राधाकृ०—पुस्तकानां सूचीपत्रम्, दिस इम्पार्टैन्ट कलेक्सन् आफ मनस्क्रिप्ट्स् बीलाङ्ग्ड् टु दी लेट् पण्डित राधाकृष्ण आफ लाहोर ।

रामकृष्ण—रिपोर्ट आन दी सर्च फार संस्कृतमनस्क्रिप्ट्स् इन दी बम्बई प्रेसी-

डेन्सी डुरिङ्ग दी ईयरस् १८८४–८५, १८८५–८६, १८८६–८७, बाई रामकृष्ण गोपाल भण्डारकर, बम्बई १८९४ ।

शेषगिरिशास्त्री—रिपोर्ट आन ए सर्च फार संस्कृत अन्ड तामिल मनस्क्रिप्ट्स् फार दी ईयर १८९६–९७, बाई एम. शेषगिरिशास्त्री, नं० १ मद्रास १८९८, नं० २ फार दी ईयर १८९३–९४, मद्रास १८९९ ।

हरप्रसादशास्त्री--नोटिसेज् आफ् संस्कृत मनस्क्रिप्ट्स् सैकिन्ड सीरीज बाई महामहोपाध्याय हरप्रसादशास्त्री, वाल्यूम १ अन्ड २, कलकत्ता १८९८ ।

हुल्श—ओवेर आइनी सेमलुङ्ग इन्दिसर हेन्थस्क्रिप्थन् उन्ध इन्स्क्रिप्थन् फान ई० हुल्श प्रिन्टेड् इन जेड्० डी० एम० जी० वा० ४० ।

हृषीकेश—ए डिस्क्रिप्टिव् कैटोलाग् आफ् संस्कृतमनस्क्रिप्ट्स् इन् कलकत्ता संस्कृतकालेज लाइब्रेरी, हृषीकेशशास्त्री अन्ड शिवचन्द्र गुई । वाल्यूम ६ ।

B. D.-Report on the search for Sanskrit Manuscripts in the Bombay presidency during the years 1887–88, 1888–89, 1889–90, and 1890–91 By Ramkrishna Gopal Bhandarkar, Bombay 1897.

B. P.-Report on the search for Sanskrit Manuscripts in the Bombay Preseidency during the year 1883–84. By R. G. Bhandarkar, Bombay 1887.

TAYLOR—A catalogue raisonnee of oriental Manuscripts in the library of the (late) college fort saint George, now in charge of the Board of Examiners. By the Rev. William Taylor. Vol. I. Madras 1857.

THE KADAMBA KULA—

(A History of ancient and Mediaeval Karnataka)

By George M. Moraes. M. A.

Bombay B. X. Furtado and sons 1931.



# THE PRINCESS OF WALES SARASVATI BHAVANA TEXTS.

Edited by
GOPINATH KAVIRAJ, M. A.

No. 1—The Kiraṇāvāli Bhāskara, a Commentary on Udayana's Kiraṇāvalī, Dravya section, by Padmanābha Miśra.
Ed. with Introduction and Index by Gopinath Kaviraj, M.A. Rs. 1-12

No. 2—The Advaita Chintāmaṇi, by Rañgoji Bhaṭṭa,
Ed. with Introduction etc. by Nārâyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1-12

No. 3—The Vedānta Kalpalatikā, by Madhusūdana Sarasvatī.
Edited with Introduction etc. by Rāmājñā Pāṇḍeya Vyākaraṇāchārya. Rs. 1-12

No. 4—The Kusumāñjali Bodhanī, a Commentary on Udayana's Theistic Tract, Nyāya Kusumāñjali, by Varadarāja.
Ed. with Introduction etc. by Gopinath Kaviraj, M.A, Rs. 2-0

No. 5—The Rasasāra, a Commentray on Udayana's Kiraṇāvalī, Guṇa Section, by Bhaṭṭa Vādīndra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1-2

No. 6—(Part I)–The Bhāvanā Viveka by Maṇḍana Miśra, with a Commentary by Bhaṭṭa Umbeka.
Ed. with Introduction etc. by M. M. Gaṅgānātha Jhā, M. A., D. Litt. Rs. 0-12

No. 6-(Part II)—Ditto Ditto Rs. 0-12

No. 7-(Part I)–The Yoginīhṛdaya dīpikā, by Amṛtānanda Nātha, being a Commentary on Yoginīhṛdaya, a part of Vāmakeśvara Tantra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1-8

No 7—( Part II ) Ditto Ditto Rs. 1-4

No. 8—The Kāvyaḍākinī, by Gaṅgānanda Kavīndra.
Ed. with Introduction etc. by Jagnnātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0-10

No. 9—(Part I)–The Bhakti Chandrikā, a Commentary on S'āṇḍilya's Bhaktisūtras, by Nārāyaṇa Tīrtha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A. Rs. 0–15

No. 10–(Part I)–The Siddhāntaratna, by Baladeva Vidyābhūṣaṇa.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A. Rs. 1–2

No. 10–(Part II)—Do. Do. Rs. 2–12

No. 11–The S'rī Vidyā Ratna Sūtras, by Gauḍapāda, with a Commentary by S'ankarāraṇya.
Ed. with Introduction etc. by Nārāyaṇa S'āstrī Khiste Sāhityāchārya. Rs. 0–9

No. 12–The Rasapradīpa, by Prabhākara Bhaṭṭa.
Ed. with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1–2

No. 13–The Siddhasiddhānta Saṅgraha, by Balabhadra.
Ed, with Introduction by Gopinath Kaviraj, M. A. Rs. 0–14

No. 14–The Triveṇikā, by Āśādhara Bhaṭṭa.
Ed. with Introduction by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0–14

No. 15–(Part I)–The Tripurārahasya. ( Jñāna Khaṇḍa)
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A Rs. 0–14

No. 15–( Part–II )—Do. Do. Rs. 2–4

No. 15–( Part III )—Do. Do. Rs. 2–9

No. 15–( Part IV )—Do. with Introduction, etc. by Gopinath Kaviraj, M. A.

No. 16–The Kāvya Vilāsa, by Chirañjīva Bhaṭṭāchārya.
Ed. with Introduction etc. by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 1–2

No. 17–The Nyāya Kalikā, by Bhaṭṭa Jayanta.
Ed. with Introduction by M. M. Gaṅgānātha Jhā, M. A., D. Litt. Rs. 0–14

No. 18–(Part I)–The Gorakṣa Siddhānta Saṅgraha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M. A. Rs, 0–14

No. 19–( Part. I )–The Prākṛita Prakāśa by Vararuchi with the Prākṛita Sañjīvanī by Vasantarāja and the Subodhinī by Sadānanda.
Ed. with Prefatory note etc. by Batuk Nath S'armā, M. A. and Baladeva Upādhyāya, M. A. Rs 2–4

No. 19–( Part.II ) Ditto Ditto Rs. 2–12

No 19—( Part. III ) Introduction etc. ( In Preparation. )

No. 20–The Mānsatattvaviveka by Viśvanātha Nyāyapañchānana Bhaṭṭāchārya.
Edited with Introduction etc. by P. Jagannātha S'āstri Hoshing Sāhityopādhyāya, with a Foreword by Pandit Gopi Nath Kavirāja, M. A., Principal, Government Sanskrit College, Benares. Rs. 0–12

No. 21–( Part I ) The Nyāya Siddhānta Mālā by Jayarāma Nyāya Pañchānana Bhaṭṭāchārya,
Edited with Introduction etc. by Mangal Deva S'āstrī M. A., D. Phil. ( Oxon ), Librarian, Govt. Sanskrit Library, Sarasvati Bhavana, Benares. Rs. 1–2

No. 21–( Part–II ) Ditto Ditto Rs. 2–0

No. 22–The Dharmānubandhi S'lokachaturdaśī by S'ri S'eṣa Kṛṣṇa with a Commentary by Rāma Pandit.
Edited with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya, Assistant Librarian, Government Sanskrit Library, Saraswati Bhavana, Benares. Rs. 1–0

No. 23–Navarātrapradīpa by Nanda Pandit Dharmādhikārī.
Ed. with Introduction etc. by Vaijanātha S'āstrī Varakale, Dharmaśāstra–S'āstrī, Sādholāl Research Scholar, Sanskrit College, Benares, with a Foreword by P. Gopinath Kaviraj, M. A., Principal, Government Sanskrīt College, Benares. Rs. 2–0

No. 24–The S'rī Rāmatāpinīyopaniṣad with the Commentary called Rāma Kāśikā in Pūrvatāpinī and Ānandanidhi in Uttaratāpinī by Ānandavana.

Ed. with Introduction etc. by Anantarāma S'astrī Vetāla Sāhityopādhyāya, Post-Achārya Scholar, Govt. Sanskrit College, Benares, with a Foreword by Pandit Gopī Nātha Kavirāja, M. A., Principal, Government Sanskrit College, Benares. Rs 3-12

No. 25-The Sāpiṇḍyakalpalatikā by Sadāśivadeva alias Āpadeva with a commentary by Nārāyaṇa Deva.
Edited with Introduction etc. by Jagannātha S'āstrī Hośiṅga, Sāhityopādhyāya, Sādholāl Research Scholar, Govt. Sanskrit College, Benares. Rs 1-4

No. 26-The Mṛgāṅkalekhā Nāṭikā by Viśvanātha Deva Kavi.
Edited with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityācharya, Asst. Librarian, Government Sanskrit Library, Benares. Rs. 1-0

No. 27-The Vidvachcharita Panchakam By Nārāyana S'āstri Khiste, Sāhityacharya, Assistant Librarian, Govt. Sanskrit College, Library, Sarasvati Bhavana, Benares. With an Introduction by Gopināth Kaviraja, M. A., Principal, Govt. Sanskrit College, Benares. Rs 2-0

No. 28-The Vrata Kos'a by Jagannātha S'āstri Hosiṅga Sāhityopādhyāya, late Sadholal Research Scholar, Sanskrit College, Benares. With a Foreword by S'rī Gopinātha Kaviraja, M.A., Principal, Govt. Sanskrit College, Benares. Rs 4-0

No. 29-The Vṛitti dīpikā By Mauni S'rī Kṛṣna Bhatta.
Edited with Introduction etc. by Pt. Gangadhara S'astri Bhāradvāja, Professor, Govt. Sanskrit College, Benares. Rs. 1-2

No. 30-The Padārtha Maṇḍanam By S'rī Venīdatta.
Edited with Introduction etc. by Pandit Gopāla S'āstri Nene, Professor, Govt. Sanskrit College, Benares. Rs. 0-14

No. 31 ( Part I)-The Tantraratna by Pârtha Sārathi Mis'ra.
Edited by M. M. Dr. Ganganatha Jha, M. A., D. Litt, Vice-Chancellor, Allahabad University, Allahabad Rs. 1-14

No. 32-The Tattvasāra by Rākhāldasa Nyāyaratna.
Edited with Introduction etc. by Harihara S'astri, Benares Hindu University.

No. 33-The Nyaya Kaustubha ( Part I ) by Mahadeva Puntamkar.
Edited with Introduction etc. by Umes'a Miśra, M. A., Allahabad University, Allahabad.

No. 34-( Part I ) The Advaita Vidyātilakam by S'rī Samarapuṅgava Dīkṣita. With a Commentary by S'rī Dharmayya Dīkṣita. Edited with Introduction, etc, by Ganapati Lal Jha M. A., Sadholal Research Scholar, Govt. Sanskrit Library, Benares.

No. 35-The Dharma Vijaya Nāṭaka by Bhūdeva S'ukla. Edited with Introduction etc, by Pandit Nārāyaṇa S'āstri Khiste, Asst. Librarian, Govt. Sanskrit Library, Benares.

No. 36-The Ananda Kanda Champu, by Mitra Misra. Edited, with a Foreword by Gopinath Kaviraj, M. A., by Nanda Kishore Sāhityācharya, Research Scholar, Sanskrit College, Benares.

No. 37-The Upanidāna Sūtra. Edited with Introduction by Dr. Mangaldeva S'āstri.

No. 38-The Kiranāvali prakās'a didhiti ( Guṇa ), by Raghunāth S'iromani. Edited by Pt. Badrināth Sāstri, M. A., Lucknow University

No. 39-The Rama Vijaya Mahākavya, by Rupanātha. Edited by Pt. Ganapatilal Jha, M. A.

No. 40-( Part I ) Kalatattva Vivechana by Raghunath Bhatta. Edited with a foreword by Gopinātha Kaviraja M. A. by Nanda Kishore S'arma Sahityacharya, Resarch Scholar Sanskrit College, Benares.

No. 41-( Part I ) Siddhānta Sārvabhauma by S'ri Munisvara. Edited with Introduction etc. by Jyautisâchārya Pandit Murlidhara Thakkura, Late Sadholal Scholar, Sanskrit College, Benares.

# THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES:

Edited by

GOPINATH KAVIRAJ, M. A.

Vol. I—

(a) Studies in Hindu Law (1) : its Evolution, by Gaṅgānātha Jhā.

(b) The View-point of Nyāya Vaiśeṣika Philosophy, by Gopi nath Kaviraj.

(c) Nirmāṇa Kāya, by Gopinath Kaviraj. Rs. 1-12

Vol. II—

(a) Paraśurāma Miśra alias Vāṇī Rasāla Rāya, by Gopinath Kaviraj.

(b) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.

(c) S'tudies in Hindu Law (2):—its sources, by Gaṅgānāth Jha.

(d) A New Bhakti Sūtra, by Gopinath Kaviraj.

(e) The System of Chakras according to Gorakṣa nātha, by Gopinath Kaviraj.

(f) Theism in Ancient India, by Gopinath Kaviraj.

(g) Hindu Poetics, by Batuka nātha S'armā.

(h) A Seventeenth Century Astrolabe, by Padmākara Dvivedi.

(i) Some aspects of Vīra S'aiva Philosophy, by Gopinath Kaviraj.

(j) Nyāya Kusumāñjali ( English Translation ), by Gopinath Kaviraj.

(k) The Definition of Poetry, by Nārāyaṇa S'āstri Khiste.

(l) Sondala Upādhyāya, by Gopinath Kaviraj. Rs. 5

Vol. III—

(a) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.

(b) Studies in Hindu Law (3): Judicial Procedure: by Gaṅgā nātha Jha.

(c) Theism in Ancient India, by Gopinath Kaviraj.

(d) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(e) Naiṣadha and S'rī Harṣa by Nīlakamala Bhaṭṭāchārya.

(f) Indian Dramaturgy, by P. N. Pāṭaṇkar. Rs. 5,

Vol. IV—

(a) Studies in Hindu Law (4): Judicial Procedure: by Gaṅgā-nātha Jha.
(b) History and Bibliography of Nyāya Vaiśeṣika Litera tture, by Gopinath Kaviraj.
(c) Analysis of the Contents of the Ṛgveda–Prātiśākhya, by Maṅgala Deva S'āstrī.
(d) Nārāyaṇa's Gaṇita kaumudī, by Padmākara Dvivedi.
(e) Food and Drink in the Ramayanic Age, by Manmatha natha Roy
(f) Satkāryavāda: Causality in Sāṅkhya, by Gopinath Kaviraj.
(g) Discipline by Consequences, by G. L. Sinha.
(h) History of the origin and expansion of the Aryans. by A. C. Ganguly.
(i) Punishments in Ancient Indian Schools, by G.L. Sinha. Rs 5

Vol. V—

(a) Ancient Home of the Aryans and their migration to India, by A. C. Ganguly.
(b) A Satrap Coin, by Shyamalal Mehr.
(c) An Estimate of the Civilisation of the Vanaras as depicted in the Rāmayaṇa, by Manmatha nātha Roy.
(d) A Comparison of the Contents of the Ṛgveda, Vajasaneya, Taittirīya & Atharvaveda Prātiśākhyas, by Maṅgala Deva S'āstri.
(e) Formal Training and the Ancient Indian Thought, by G.L Sinha.
(f) History and Bibliography of Nyāya Vais'eṣika Literature, by Gopinath Kavirāj.
(g) A Descriptive Index to the names in the Rāmāyaṇa, by Manmatha nātha Roy.
(h) Notes and Queries, (1) Virgin Worship, by Gopinath Kaviraj. Rs. 5

Vol. VI—

(a) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob..
(b) Some Aspects of the History and Doctrines of the Nāthas, by Gopinath Kaviraj.
(c) An Index etc. the Ramayana, by Manmatha nātha Roy.
(d) Studies in Hindu Law by M. M. Gaṅganatha Jha.
(e) The Mimamsa manuscripts in the Govt. Sanskrit Library (Benares), by Gopinātha Kavirāj.
(f) Notes and Queries, by Gopinātha Kavirāj.

Vol. VII.

(a) Bhāmaha and his Kāvyālaṅkāra, by Baṭukanātha S'armā and Baladeva Upādhyāya.

(b) Some variants in the readings of the Vais'eṣika Sūtras, by Gopinātha Kavirāj.

(c) History and Bibliography of Nyâya Vais'eṣika Literature, by Gopinātha Kavirāj.

(d) An attempt to arrive at the correct meaning of some obscure Vedic words, by Sītāram Joshi.

(e) A comparison of the contents of the Rig Veda, Vajasaneya, Taittiriya, and Atharva Veda (Chāturadhyāyika) Prātis'ākhyas, by Mangal Deva Shāstri.

(f) An Index to the Ramayaṇa, by Manmatha Nāth Roy.

(g) An Index to S'abara's Bhāṣya, by the late Col. J. A Jacob.

(h) Gleanings from the Tantras, by Gopinātha Kavirāj.

(i) The date of Madhusudana Saraswati, by Gopinātha Kavirāj.

(j) Descriptive notes on Sanskrit Manuscripts, by Gopinātha Kavirāj.

(k) A note on the meaning of the word Parārdha, by Umes'a Mis'ra.

Vol. VIII.

(a) Indian Philosophy, by Taraknath Sanyal.

(b) An Index to the Rāmāyaṇa, by Manmatha Nath Roy.

(c) Index to S'abara's Bhāṣya, by the late Col. J. A Jacob.

(d) Hari Svāmi, the commentator of S'atapatha Brāhmana and the date of Skanda Svami the commentator of the Rigveda, by Mangaladeva S'âstri.

(e) Mysticism in Veda, by Gopināth Kaviraj.

(f) The Deva dāsī; a brief history of the Institution, by Manmatha Nātha Roy.

Vol. IX (In progress)

(a) The Life of a Yogin, by Gopinātha Kavirāj.

# THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES

( SANSKRIT )

## SARASVATALOKA

Edited by

GOPINATH KAVIRAJ, M. A.

Kirana 1 ( In progress )

(a) Mangalam, etc, by Nārāyaṇa S'āstri Khiste.

(b) Mimansaka mata saṃgraha, by Haranchndra Bhaṭṭācharya.

(c) S'rimad Ācharya Mandana Mis'ra by Chinna Swami S'astri

(d) Bhagavato Buddhasya Charitam Upades'as'cha : by Gopinatha Kaviraj

Kirana I ( Supplemeut )

Sanskrita Kavi Parichaya–(Bharavi) by Nanda Kishore Sharma.

Kirana II ( In progress )

(a) S'āradā Prasādanam by Nārâyana S'āstri Khiste.

(b) Chūḍāmaṇi Dars'anam by S'as'adhara Tarkachūḍāmaṇi.

To be had of
The Superintendent
Government Press, U. P.,
Allahabad.

